जन्माद्यस्य यतोऽन्वयादितरतः चार्थेष्वभिज्ञः स्वराट् ।
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा ।
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि । १ ॥

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां ।
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः ।
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिः तत् क्षणात् ॥ २ ॥

(द्रुतविलम्बित)
निगमकल्पतरोर्गलितं फलं ।
    शुकमुखाद् अमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं ।
    मुहुरहो रसिका भुवि भावुकाः । ३ ॥

(अनुष्टुप्)
नैमिषेऽनिमिषक्षेत्रे ऋषयः शौनकादयः ।
सत्रं स्वर्गायलोकाय सहस्रसममासत ॥ ४ ॥

त एकदा तु मुनयः प्रातर्हुतहुताग्नयः ।
सत्कृतं सूतमासीनं पप्रच्छुः इदमादरात् ॥ ५ ॥

ऋषय ऊचुः ।
त्वया खलु पुराणानि सेतिहासानि चानघ ।
आख्यातान्यप्यधीतानि धर्मशास्त्राणि यान्युत । ६ ॥

यानि वेदविदां श्रेष्ठो भगवान् बादरायणः ।
अन्ये च मुनयः सूत परावरविदो विदुः ॥ ७ ॥

वेत्थ त्वं सौम्य तत्सर्वं तत्त्वतः तदनुग्रहात् ।
ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ८ ॥

तत्र तत्राञ्जसाऽऽयुष्मन् भवता यद् विनिश्चितम् ।
पुंसां एकान्ततः श्रेयः तन्नः शंसितुमर्हसि । ०९ ॥

प्रायेणाल्पायुषः सभ्य कलौ अस्मिन् युगे जनाः ।
मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः ॥ १० ॥

भूरीणि भूरिकर्माणि श्रोतव्यानि विभागशः ।
अतः साधोऽत्र यत्सारं समुद्धृत्य मनीषया ।

ब्रूहि नः श्रद्दधानानां येनात्मा संप्रसीदति ॥ ११ ॥

सूत जानासि भद्रं ते भगवान् सात्वतां पतिः ।
देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया ॥ १२ ॥

तन्नः शुश्रूषमाणानां अर्हस्यङ्गानुवर्णितुम् ।
यस्यावतारो भूतानां क्षेमाय च भवाय च ॥ १३ ॥

आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।
ततः सद्यो विमुच्येत यद् बिभेति स्वयं भयम् ॥ १४ ॥

यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः ।
सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया ॥ १५ ॥

को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः ।
शुद्धिकामो न श‍ृणुयाद् यशः कलिमलापहम् ॥ १६ ॥

तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः ।
ब्रूहि नः श्रद्दधानानां लीलया दधतः कलाः ॥ १७ ॥

अथाख्याहि हरेर्धीमन् अवतारकथाः शुभाः ।
लीला विदधतः स्वैरं ईश्वरस्यात्ममायया ॥ १८ ॥

वयं तु न वितृप्याम उत्तमश्लोकविक्रमे ।
यत् श‍ृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे ॥ १९ ॥

कृतवान् किल वीर्याणि सह रामेण केशवः ।
अतिमर्त्यानि भगवान् गूढः कपटमानुषः ॥ २० ॥

कलिमागतमाज्ञाय क्षेत्रेऽस्मिन् वैष्णवे वयम् ।
आसीना दीर्घसत्रेण कथायां सक्षणा हरेः ॥ २१ ॥

त्वं नः संदर्शितो धात्रा दुस्तरं निस्तितीर्षताम् ।
कलिं सत्त्वहरं पुंसां कर्णधार इवार्णवम् ॥ २२ ॥

ब्रूहि योगेश्वरे कृष्णे ब्रह्मण्ये धर्मवर्मणि ।
स्वां काष्ठामधुनोपेते धर्मः कं शरणं गतः ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे नैमिषीयोपाखाने प्रथमोऽध्यायः ॥ १ ॥

व्यास उवाच ।
इति संप्रश्नसंहृष्टो विप्राणां रौमहर्षणिः ।
प्रतिपूज्य वचस्तेषां प्रवक्तुं उपचक्रमे ॥ १ ॥
सूत उवाच ।
(वसंततिलका)
यं प्रव्रजन्तमनुपेतमपेतकृत्यं
द्वैपायनो विरहकातर आजुहाव ।
पुत्रेति तन्मयतया तरवोऽभिनेदुः
तं सर्वभूतहृदयं मुनिमानतोऽस्मि ॥ २ ॥
यः स्वानुभावमखिल श्रुतिसारमेकं
अध्यात्मदीपं अतितितीर्षतां तमोऽन्धम् ।
संसारिणां करुणयाऽऽह पुराणगुह्यं
तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥ ३ ॥
(अनुष्टुप्)
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ४ ॥
मुनयः साधु पृष्टोऽहं भवद्भिः लोकमङ्गलम् ।
यत्कृतः कृष्णसंप्रश्नो येनात्मा सुप्रसीदति ॥ ५ ॥
स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ।
अहैतुक्यप्रतिहता ययात्मा संप्रसीदति ॥ ६ ॥
वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानं च यद् अहैतुकम् ॥ ७ ॥
धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ।
नोत्पादयेद् यदि रतिं श्रम एव हि केवलम् ॥ ८ ॥
धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥ ९ ॥
कामस्य नेन्द्रियप्रीतिः लाभो जीवेत यावता ।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः ॥ १० ॥
वदन्ति तत् तत्त्वविदः तत्त्वं यत् ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ ११ ॥
तत् श्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया ।
पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया ॥ १२ ॥
अतः पुम्भिः द्विजश्रेष्ठा वर्णाश्रमविभागशः ।
स्वनुष्ठितस्य धर्मस्य संसिद्धिः हरितोषणम् ॥ १३ ॥
तस्मादेकेन मनसा भगवान् सात्वतां पतिः ।
श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥ १४ ॥
यद् अदनुध्यासिना युक्ताः कर्मग्रन्थिनिबन्धनम् ।
छिन्दन्ति कोविदास्तस्य को न कुर्यात् कथारतिम् ॥ १५ ॥

शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः ।
स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात् ॥ १६ ॥
श्रृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्तनः ।
हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत्सताम् ॥ १७ ॥
नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया ।
भगवति उत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥ १८ ॥
तदा रजस्तमोभावाः कामलोभादयश्च ये ।
चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदति ॥ १९ ॥
एवं प्रसन्नमनसो भगवद्भक्तियोगतः ।
भगवत् तत्त्वविज्ञानं मुक्तसङ्गस्य जायते ॥ २० ॥
भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ॥ २१ ॥
अतो वै कवयो नित्यं भक्तिं परमया मुदा ।
वासुदेवे भगवति कुर्वन्त्यात्मप्रसादनीम् ॥ २२ ॥
(वसंततिलका)
सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैः
युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः
श्रेयांसि तत्र खलु सत्त्वतनोः नृणां स्युः ॥ २३ ॥
(अनुष्टुप्)
पार्थिवाद् दारुणो धूमः तस्मादग्निस्त्रयीमयः ।
तमसस्तु रजस्तस्मात् सत्त्वं यद् ब्रह्मदर्शनम् ॥ २४ ॥
भेजिरे मुनयोऽथाग्रे भगवन्तं अधोक्षजम् ।
सत्त्वं विशुद्धं क्षेमाय कल्पन्ते येऽनु तानिह ॥ २५ ॥
मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ ।
नारायणकलाः शान्ता भजन्ति ह्यनसूयवः ॥ २६ ॥
रजस्तमःप्रकृतयः समशीला भजन्ति वै ।
पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः ॥ २७ ॥
वासुदेवपरा वेदा वासुदेवपरा मखाः ।
वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥ २८ ॥
वासुदेवपरं ज्ञानं वासुदेवपरं तपः ।
वासुदेवपरो धर्मो वासुदेवपरा गतिः ॥ २९ ॥
स एवेदं ससर्जाग्रे भगवान् आत्ममायया ।
सद् असद् रूपया चासौ गुणमय्यागुणो विभुः ॥ ३० ॥
तया विलसितेष्वेषु गुणेषु गुणवानिव ।
अन्तःप्रविष्ट आभाति विज्ञानेन विजृम्भितः ॥ ३१ ॥
यथा ह्यवहितो वह्निः दारुष्वेकः स्वयोनिषु ।
नानेव भाति विश्वात्मा भूतेषु च तथा पुमान् ॥ ३२ ॥

असौ गुणमयैर्भावैः भूत सूक्ष्मेन्द्रियात्मभिः ।
स्वनिर्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान् ॥ ३३ ॥
भावयत्येष सत्त्वेन लोकान्वै लोकभावनः ।
लीलावतारानुरतो देवतिर्यङ् नरादिषु ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे नैमिषीयोपाख्याने द्वितीयोऽध्यायः ॥ २ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

सूत उवाच ।
(अनुष्टुप्)
जगृहे पौरुषं रूपं भगवान् महदादिभिः ।
संभूतं षोडशकलं आदौ लोकसिसृक्षया ॥। १ ॥
यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः ।
नाभिह्रदाम्बुजादासीद् ब्रह्मा विश्वसृजां पतिः ॥ २ ॥
यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः ।
तद् वै भगवतो रूपं विशुद्धं सत्त्वमूर्जितम् ॥। ३ ॥
(इंद्रवंशा)
पश्यन्त्यदो रूपमदभ्रचक्षुषा
    सहस्रपादोरुभुजाननाद्भुतम् ।
सहस्रमूर्धश्रवणाक्षिनासिकं
    सहस्रमौल्यम्बरकुण्डलोल्लसत् ॥ ४ ॥
(अनुष्टुप्)
एतन्नानावताराणां निधानं बीजमव्ययम् ।
यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः ॥ ५ ॥
स एव प्रथमं देवः कौमारं सर्गमाश्रितः ।
चचार दुश्चरं ब्रह्मा ब्रह्मचर्यमखण्डितम् ॥ ६ ॥
द्वितीयं तु भवायास्य रसातलगतां महीम् ।
उद्धरिष्यन् उपादत्त यज्ञेशः सौकरं वपुः ॥ ७ ॥
तृतीयं ऋषिसर्गं वै देवर्षित्वमुपेत्य सः ।
तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः ॥ ८ ॥
तुर्ये धर्मकलासर्गे नरनारायणौ ऋषी ।
भूत्वात्मोपशमोपेतं अकरोद् दुश्चरं तपः ॥ ९ ॥
पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् ।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥ १० ॥
षष्ठे अत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया ।
आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ॥ ११ ॥
ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत ।
स यामाद्यैः सुरगणैः अपात् स्वायंभुवान्तरम् ॥ १२ ॥
अष्टमे मेरुदेव्यां तु नाभेर्जात उरुक्रमः ।
दर्शयन्वर्त्म धीराणां सर्वाश्रम नमस्कृतम् ॥ १३ ॥
ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः ।
दुग्धेमामोषधीर्विप्राः तेनायं स उशत्तमः ॥ १४ ॥
रूपं स जगृहे मात्स्यं चाक्षुषोदधिसंप्लवे ।
नाव्यारोप्य महीमय्यां अपाद् वैवस्वतं मनुम् ॥ १५ ॥
सुरासुराणां उदधिं मथ्नतां मन्दराचलम् ।
दध्रे कमठरूपेण पृष्ठ एकादशे विभुः ॥ १६ ॥

धान्वन्तरं द्वादशमं त्रयोदशममेव च ।
अपाययत् सुरान् अन्यान् मोहिन्या मोहयन् स्त्रिया ॥ १७ ॥
चतुर्दशं नारसिंहं बिभ्रद् दैत्येन्द्रमूर्जितम् ।
ददार करजैरुरौ एरकां कटकृत् यथा ॥ १८ ॥
पञ्चदशं वामनकं कृत्वागादध्वरं बलेः ।
पदत्रयं याचमानः प्रत्यादित्सुस्त्रिविष्टपम् ॥ १९ ॥
अवतारे षोडशमे पश्यन् ब्रह्मद्रुहो नृपान् ।
त्रिःसप्तकृत्वः कुपितो निःक्षत्रां अकरोन् महीम् ॥ २० ॥
ततः सप्तदशे जातः सत्यवत्यां पराशरात् ।
चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥ २१ ॥
नरदेवत्वमापन्नः सुरकार्यचिकीर्षया ।
समुद्रनिग्रहादीनि चक्रे वीर्याण्यतः परम् ॥ २२ ॥
एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ।
रामकृष्णाविति भुवो भगवान् अहरद् भरम् ॥ २३ ॥
ततः कलौ संप्रवृत्ते सम्मोहाय सुरद्विषाम् ।
बुद्धो नाम्नांजनसुतः कीकटेषु भविष्यति ॥ २४ ॥
अथासौ युगसंध्यायां दस्युप्रायेषु राजसु ।
जनिता विष्णुयशसो नाम्ना कल्किर्जगत्पतिः ॥ २५ ॥
अवतारा ह्यसङ्ख्येया हरेः सत्त्वनिधेर्द्विजाः ।
यथाविदासिनः कुल्याः सरसः स्युः सहस्रशः ॥ २६ ॥
ऋषयो मनवो देवा मनुपुत्रा महौजसः ।
कलाः सर्वे हरेरेव सप्रजापतयः तथा ॥ २७ ॥
एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ॥ २८ ॥
जन्म गुह्यं भगवतो य एतत्प्रयतो नरः ।
सायं प्रातर्गृणन् भक्त्या दुःखग्रामाद् विमुच्यते ॥ २९ ॥
एतद् रूपं भगवतो ह्यरूपस्य चिदात्मनः ।
मायागुणैर्विरचितं महदादिभिरात्मनि ॥ ३० ॥
यथा नभसि मेघौघो रेणुर्वा पार्थिवोऽनिले ।
एवं द्रष्टरि दृश्यत्वं आरोपितं अबुद्धिभिः ॥ ३१ ॥
अतः परं यदव्यक्तं अव्यूढगुणबृंहितम् ।
अदृष्टाश्रुतवस्तुत्वात् स जीवो यत् पुनर्भवः ॥ ३२ ॥
यत्रेमे सदसद् रूपे प्रतिषिद्धे स्वसंविदा ।
अविद्ययाऽऽत्मनि कृते इति तद्ब्रह्मदर्शनम् ॥ ३३ ॥
यद्येषोपरता देवी माया वैशारदी मतिः ।
संपन्न एवेति विदुः महिम्नि स्वे महीयते ॥ ३४ ॥
एवं जन्मानि कर्माणि ह्यकर्तुरजनस्य च ।
वर्णयन्ति स्म कवयो वेदगुह्यानि हृत्पतेः ॥ ३५ ॥

(उपेंद्रवज्रा)
स वा इदं विश्वममोघलीलः
    सृजत्यवत्यत्ति न सज्जतेऽस्मिन् ।
भूतेषु चान्तर्हित आत्मतंत्रः
    षाड्वर्गिकं जिघ्रति षड्गुणेशः ॥ ३६ ॥
न चास्य कश्चिन्निपुणेन धातुः
    अवैति जन्तुः कुमनीष ऊतीः ।
नामानि रूपाणि मनोवचोभिः
    सन्तन्वतो नटचर्यामिवाज्ञः ॥ ३७ ॥
स वेद धातुः पदवीं परस्य
    दुरन्तवीर्यस्य रथाङ्गपाणेः ।
योऽमायया सन्ततयानुवृत्त्या
    भजेत तत्पादसरोजगन्धम् ॥ ३८ ॥
अथेह धन्या भगवन्त इत्थं
    यद्वासुदेवेऽखिललोकनाथे ।
कुर्वन्ति सर्वात्मकमात्मभावं
    न यत्र भूयः परिवर्त उग्रः ॥ ३९ ॥
इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् ।
    उत्तमश्लोकचरितं चकार भगवान् ऋषिः ॥ ४० ॥
(अनुष्टुप्)
निःश्रेयसाय लोकस्य धन्यं स्वस्त्ययनं महत् ।
तदिदं ग्राहयामास सुतं आत्मवतां वरम् ॥ ४१ ॥
सर्ववेदेतिहासानां सारं सारं समुद्धृतम् ।
स तु संश्रावयामास महाराजं परीक्षितम् ॥ ४२ ॥
प्रायोपविष्टं गङ्गायां परीतं परमर्षिभिः ।
कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह ॥ ४३ ॥
कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः ।
तत्र कीर्तयतो विप्रा विप्रर्षेर्भूरितेजसः ॥ ४४ ॥
अहं चाध्यगमं तत्र निविष्टस्तद् अनुग्रहात् ।
सोऽहं वः श्रावयिष्यामि यथाधीतं यथामति ॥ ४५ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे नैमिषीयोपाख्याने तृतीयोऽध्यायः ॥ ३ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

व्यास उवाच ।
(अनुष्टुप्)
इति ब्रुवाणं संस्तूय मुनीनां दीर्घसत्रिणाम् ।
वृद्धः कुलपतिः सूतं बह्वृचः शौनकोऽब्रवीत् ॥ १ ॥
शौनक उवाच ।
सूत सूत महाभाग वद नो वदतां वर ।
कथां भागवतीं पुण्यां यदाह भगवान् शुकः ॥ २ ॥
कस्मिन् युगे प्रवृत्तेयं स्थाने वा केन हेतुना ।
कुतः सञ्चोदितः कृष्णः कृतवान् संहितां मुनिः ॥ ३ ॥
तस्य पुत्रो महायोगी समदृङ् निर्विकल्पकः ।
एकान्तमतिः उन्निद्रो गूढो मूढ इवेयते ॥ ४ ॥
(वसंततिलका)
दृष्ट्वानुयान्तमृषिमात्मजमप्यनग्नं
देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम् ।
तद्वीक्ष्य पृच्छति मुनौ जगदुस्तवास्ति
स्त्रीपुम्भिदा न तु सुतस्य विविक्तदृष्टेः ॥ ५ ॥
(अनुष्टुप्)
कथमालक्षितः पौरैः संप्राप्तः कुरुजाङ्गलान् ।
उन्मत्तमूकजडवद् विचरन् गजसाह्वये ॥ ६ ॥
कथं वा पाण्डवेयस्य राजर्षेर्मुनिना सह ।
संवादः समभूत् तात यत्रैषा सात्वती श्रुतिः ॥ ७ ॥
स गोदोहनमात्रं हि गृहेषु गृहमेधिनाम् ।
अवेक्षते महाभागः तीर्थीकुर्वन् तदाश्रमम् ॥ ८ ॥
अभिमन्युसुतं सूत प्राहुर्भागवतोत्तमम् ।
तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः ॥ ९ ॥
स सम्राट् कस्य वा हेतोः पाण्डूनां मानवर्धनः ।
प्रायोपविष्टो गङ्गायां अनादृत्य अधिराट् श्रियम् ॥ १० ॥
(वंशस्थ)
नमन्ति यत्पादनिकेतमात्मनः
शिवाय हानीय धनानि शत्रवः ।
कथं स वीरः श्रियमङ्ग दुस्त्यजां
युवैषतोत् स्रष्टुमहो सहासुभिः ॥ ११ ॥
शिवाय लोकस्य भवाय भूतये
य उत्तमश्लोकपरायणा जनाः ।
जीवन्ति नात्मार्थमसौ पराश्रयं
मुमोच निर्विद्य कुतः कलेवरम् ॥ १२ ॥
(अनुष्टुप्)
तत्सर्वं नः समाचक्ष्व पृष्टो यदिह किञ्चन ।

मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात् ॥ १३ ॥
सूत उवाच
द्वापरे समनुप्राप्ते तृतीये युगपर्यये ।
जातः पराशराद् योगी वासव्यां कलया हरेः ॥ १४ ॥
स कदाचित् सरस्वत्या उपस्पृश्य जलं शुचिः ।
विविक्तदेश आसीन उदिते रविमण्डले ॥ १५ ॥
परावरज्ञः स ऋषिः कालेनाव्यक्तरंहसा ।
युगधर्मव्यतिकरं प्राप्तं भुवि युगे युगे ॥ १६ ॥
भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम् ।
अश्रद्दधानान्निःसत्त्वान् दुर्मेधान् ह्रसितायुषः ॥ १७ ॥
दुर्भगांश्च जनान् वीक्ष्य मुनिर्दिव्येन चक्षुषा ।
सर्ववर्णाश्रमाणां यद् दध्यौ हितममोघदृक् ॥ १८ ॥
चातुर्होत्रं कर्म शुद्धं प्रजानां वीक्ष्य वैदिकम् ।
व्यदधाद् यज्ञसन्तत्यै वेदमेकं चतुर्विधम् ॥ १९ ॥
ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार उद्धृताः ।
इतिहासपुराणं च पञ्चमो वेद उच्यते ॥ २० ॥
तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः कविः ।
वैशंपायन एवैको निष्णातो यजुषामुत ॥ २१ ॥
अथर्वाङ्गिरसामासीत् सुमन्तुर्दारुणो मुनिः ।
इतिहासपुराणानां पिता मे रोमहर्षणः ॥ २२ ॥
त एत ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा ।
शिष्यैः प्रशिष्यैः तत् शिष्यैः वेदास्ते शाखिनोऽभवन् ॥ २३ ॥
त एव वेदा दुर्मेधैः धार्यन्ते पुरुषैर्यथा ।
एवं चकार भगवान् व्यासः कृपणवत्सलः ॥ २४ ॥
स्त्रीशूद्रद्विजबंधूनां त्रयी न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ २५ ॥
एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः ।
सर्वात्मकेनापि यदा नातुष्यत् हृदयं ततः ॥ २६ ॥
नातिप्रसीदद् हृदयः सरस्वत्यास्तटे शुचौ ।
वितर्कयन् विविक्तस्थ इदं प्रोवाच धर्मवित् ॥ २७ ॥
धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः ।
मानिता निर्व्यलीकेन गृहीतं चानुशासनम् ॥ २८ ॥
भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः ।
दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युत ॥ २९ ॥
तथापि बत मे दैह्यो ह्यात्मा चैवात्मना विभुः ।
असंपम्पन्न इवाभाति ब्रह्मवर्चस्य सत्तमः ॥ ३० ॥
किं वा भागवता धर्मा न प्रायेण निरूपिताः ।

प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः ॥ ३१ ॥
तस्यैवं खिलमात्मानं मन्यमानस्य खिद्यतः ।
कृष्णस्य नारदोऽभ्यागाद् आश्रमं प्रागुदाहृतम् ॥ ३२ ॥
तमभिज्ञाय सहसा प्रत्युत्थायागतं मुनिः ।
पूजयामास विधिवत् नारदं सुरपूजितम् ॥ ३३ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे नैमिषीयोपाख्याने चतुर्थोऽध्यायः ॥ ४ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

सूत उवाच ।
(अनुष्टुप्)
अथ तं सुखमासीन उपासीनं बृहच्छ्रवाः ।
देवर्षिः प्राह विप्रर्षिं वीणापाणिः स्मयन्निव ॥ १ ॥
नारद उवाच ।
पाराशर्य महाभाग भवतः कच्चिदात्मना ।
परितुष्यति शारीर आत्मा मानस एव वा ॥ २ ॥
जिज्ञासितं सुसंपन्नं अपि ते महदद्‌भुतम् ।
कृतवान् भारतं यस्त्वं सर्वार्थपरिबृंहितम् ॥ ३ ॥
जिज्ञासितमधीतं च यत्तद् ब्रह्म सनातनम् ।
तथापि शोचस्यात्मानं अकृतार्थ इव प्रभो ॥ ४ ॥
व्यास उवाच ।
(उपेंद्रवज्रा)
अस्त्येव मे सर्वमिदं त्वयोक्तं
    तथापि नात्मा परितुष्यते मे ।
तन्मूलमव्यक्तमगाधबोधं
    पृच्छामहे त्वात्मभवात्मभूतम् ॥ ५ ॥
स वै भवान् वेद समस्तगुह्यं
    उपासितो यत्पुरुषः पुराणः ।
परावरेशो मनसैव विश्वं
    सृजत्यवत्यत्ति गुणैरसङ्गः ॥ ६ ॥
त्वं पर्यटन्नर्क इव त्रिलोकीं
    अन्तश्चरो वायुरिवात्मसाक्षी ।
परावरे ब्रह्मणि धर्मतो व्रतैः
    स्नातस्य मे न्यूनमलं विचक्ष्व ॥ ७ ॥
श्रीनारद उवाच ।
(अनुष्टुप्)
भवतानुदितप्रायं यशो भगवतोऽमलम् ।
येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलम् ॥ ८ ॥
यथा धर्मादयश्चार्था मुनिवर्यानुकीर्तिताः ।
न तथा वासुदेवस्य महिमा ह्यनुवर्णितः ॥ ९ ॥
(वंशस्थ)
न यद् वचश्चित्रपदं हरेर्यशो
    जगत्पवित्रं प्रगृणीत कर्हिचित् ।
तद्वायसं तीर्थमुशन्ति मानसा
    न यत्र हंसा निरमन्त्युशिक्क्षयाः ॥ १० ॥
तद्वाग्विसर्गो जनताघविप्लवो
    यस्मिन् प्रतिश्लोकमबद्धवत्यपि ।

नामान्यनन्तस्य यशोऽङ्कितानि यत्
    श्रृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ११ ॥
नैष्कर्म्यमप्यच्युतभाववर्जितं
    न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे
    न चार्पितं कर्म यदप्यकारणम् ॥ १२ ॥
अथो महाभाग भवानमोघदृक्
    शुचिश्रवाः सत्यरतो धृतव्रतः ।
उरुक्रमस्याखिलबंधमुक्तये
    समाधिनानुस्मर तद्विचेष्टितम् ॥ १३ ॥
ततोऽन्यथा किञ्चन यद्विवक्षतः
    पृथग् दृशस्तत् कृतरूपनामभिः ।
न कर्हिचित् क्वापि च दुःस्थिता मतिः
    लभेत वाताहतनौरिवास्पदम् ॥ १४ ॥
जुगुप्सितं धर्मकृतेऽनुशासतः
    स्वभावरक्तस्य महान् व्यतिक्रमः ।
यद्वाक्यतो धर्म इतीतरः स्थितो
    न मन्यते तस्य निवारणं जनः ॥ १५ ॥
विचक्षणोऽस्यार्हति वेदितुं विभोः
    अनन्तपारस्य निवृत्तितः सुखम् ।
प्रवर्तमानस्य गुणैरनात्मनः
    ततो भवान् दर्शय चेष्टितं विभोः ॥ १६ ॥
त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेः
    भजन् अपक्वोऽथ पतेत् ततो यदि ।
यत्र क्व वाभद्रमभूदमुष्य किं
    को वार्थ आप्तोऽभजतां स्वधर्मतः ॥ १७ ॥
(इंद्रवंशा)
तस्यैव हेतोः प्रयतेत कोविदो
    न लभ्यते यद्भ्रमतामुपर्यधः ।
तल्लभ्यते दुःखवदन्यतः सुखं
    कालेन सर्वत्र गभीररंहसा ॥ १८ ॥
(वंशस्थ)
न वै जनो जातु कथञ्चनाव्रजेत्
    मुकुंदसेव्यन्यवदङ्ग संसृतिम् ।
स्मरन् मुकुंदाङ्घ्र्युपगूहनं पुनः
    विहातुमिच्छेन्न रसग्रहो जनः ॥ १९ ॥
इदं हि विश्वं भगवानिवेतरो
    यतो जगत्स्थाननिरोधसंभवाः ।

तद्धि स्वयं वेद भवांस्तथापि वै
    प्रादेशमात्रं भवतः प्रदर्शितम् ॥ २० ॥
त्वमात्मनात्मानमवेह्यमोघदृक्
    परस्य पुंसः परमात्मनः कलाम् ।
अजं प्रजातं जगतः शिवाय तन्
    महानुभावाभ्युदयोऽधिगण्यताम् ॥ २१ ॥
इदं हि पुंसस्तपसः श्रुतस्य वा
    स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः ।
अविच्युतोऽर्थः कविभिर्निरूपितो
    यदुत्तमश्लोक गुणानुवर्णनम् ॥ २२ ॥
(इंद्रवंशा)
अहं पुरातीतभवेऽभवं मुने
    दास्यास्तु कस्याश्चन वेदवादिनाम् ।
निरूपितो बालक एव योगिनां
    शुश्रूषणे प्रावृषि निर्विविक्षताम् ॥ २३ ॥
ते मय्यपेताखिलचापलेऽर्भके
    दान्तेऽधृतक्रीडनकेऽनुवर्तिनि ।
चक्रुः कृपां यद्यपि तुल्यदर्शनाः
    शुश्रूषमाणे मुनयोऽल्पभाषिणि ॥ २४ ॥
उच्छिष्टलेपाननुमोदितो द्विजैः
    सकृत्स्म भुञ्जे तदपास्तकिल्बिषः ।
एवं प्रवृत्तस्य विशुद्धचेतसः
    तद्धर्म एवात्मरुचिः प्रजायते ॥ २५ ॥
(वंशस्थ)
तत्रान्वहं कृष्णकथाः प्रगायतां
    अनुग्रहेणाश्रृणवं मनोहराः ।
ताः श्रद्धया मेऽनुपदं विश्रृण्वतः
    प्रियश्रवस्यङ्ग ममाभवद् रुचिः ॥ २६ ॥
(इंद्रवंशा)
तस्मिंस्तदा लब्धरुचेर्महामते
    प्रियश्रवस्यस्खलिता मतिर्मम ।
ययाहमेतत् सदसत्स्वमायया
    पश्ये मयि ब्रह्मणि कल्पितं परे ॥ २७ ॥
इत्थं शरत् प्रावृषिकावृतू हरेः
    विश्रृण्वतो मेऽनुसवं यशोऽमलम् ।
सङ्कीर्त्यमानं मुनिभिर्महात्मभिः
    भक्तिः प्रवृत्ताऽऽत्मरजस्तमोपहा ॥ २८ ॥
(अनुष्टुप्)

तस्यैवं मेऽनुरक्तस्य प्रश्रितस्य हतैनसः ।
श्रद्दधानस्य बालस्य दान्तस्यानुचरस्य च ॥ २९ ॥
ज्ञानं गुह्यतमं यत्तत् साक्षाद्भगवतोदितम् ।
अन्ववोचन् गमिष्यन्तः कृपया दीनवत्सलाः ॥ ३० ॥
येनैवाहं भगवतो वासुदेवस्य वेधसः ।
मायानुभावमविदं येन गच्छन्ति तत्पदम् ॥ ३१ ॥
एतत् संसूचितं ब्रह्मन् तापत्रयचिकित्सितम् ।
यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥ ३२ ॥
आमयो यश्च भूतानां जायते येन सुव्रत ।
तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥ ३३ ॥
एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।
त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥ ३४ ॥
यदत्र क्रियते कर्म भगवत् परितोषणम् ।
ज्ञानं यत् तद् अधीनं हि भक्तियोगसमन्वितम् ॥ ३५ ॥
कुर्वाणा यत्र कर्माणि भगवच्छिक्षयासकृत् ।
गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च ॥ ३६ ॥
नमो भगवते तुभ्यं वासुदेवाय धीमहि ।
प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च ॥ ३७ ॥
इति मूर्त्यभिधानेन मंत्रमूर्तिममूर्तिकम् ।
यजते यज्ञपुरुषं स सम्यग् दर्शनः पुमान् ॥ ३८ ॥
इमं स्वनिगमं ब्रह्मन् अवेत्य मदनुष्ठितम् ।
अदान्मे ज्ञानमैश्वर्यं स्वस्मिन् भावं च केशवः ॥ ३९ ॥
(इंद्रवंशा)
त्वमप्यदभ्रश्रुत विश्रुतं विभोः
    समाप्यते येन विदां बुभुत्सितम् ।
प्राख्याहि दुःखैर्मुहुरर्दितात्मनां
    संक्लेशनिर्वाणमुशन्ति नान्यथा ॥ ४० ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे व्यासनारदसंवादे पञ्चमोऽध्यायः ॥ ५ ॥

हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

सूत उवाच ।
(अनुष्टुप्)
एवं निशम्य भगवान् देवर्षेर्जन्म कर्म च ।
भूयः पप्रच्छ तं ब्रह्मन् व्यासः सत्यवतीसुतः ॥। १ ॥
व्यास उवाच ।
भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिस्तव ।
वर्तमानो वयस्याद्ये ततः किमकरोद्भवान् ॥। २ ॥
स्वायंभुव कया वृत्त्या वर्तितं ते परं वयः ।
कथं चेदमुदस्राक्षीः काले प्राप्ते कलेवरम् ॥। ३ ॥
प्राक्कल्पविषयामेतां स्मृतिं ते सुरसत्तम ।
न ह्येष व्यवधात्काल एष सर्वनिराकृतिः ॥। ४ ॥
नारद उवाच ।
भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिर्मम ।
वर्तमानो वयस्याद्ये तत एतदकारषम् ॥। ५ ॥
एकात्मजा मे जननी योषिन्मूढा च किङ्करी ।
मय्यात्मजेऽनन्यगतौ चक्रे स्नेहानुबंधनम् ॥। ६ ॥
सास्वतंत्रा न कल्पासीद् योगक्षेमं ममेच्छती ।
ईशस्य हि वशे लोको योषा दारुमयी यथा ॥। ७ ॥
अहं च तद्ब्रह्मकुले ऊषिवांस्तदपेक्षया ।
दिग्देशकालाव्युत्पन्नो बालकः पञ्चहायनः ॥। ८ ॥
एकदा निर्गतां गेहाद् दुहन्तीं निशि गां पथि ।
सर्पोऽदशत्पदा स्पृष्टः कृपणां कालचोदितः ॥ ९ ॥
तदा तदहमीशस्य भक्तानां शमभीप्सतः ।
अनुग्रहं मन्यमानः प्रातिष्ठं दिशमुत्तराम् ॥ १० ॥
स्फीताञ्जनपदांस्तत्र पुरग्रामव्रजाकरान् ।
खेटखर्वटवाटीश्च वनान्युपवनानि च ॥ ११ ॥
चित्रधातुविचित्राद्रीन् इभभग्नभुजद्रुमान् ।
जलाशयान् शिवजलान् नलिनीः सुरसेविताः ॥ १२ ॥
चित्रस्वनैः पत्ररथैः विभ्रमद् भ्रमरश्रियः ।
नलवेणुशरस्तम्ब कुशकीचकगह्वरम् ॥ १३ ॥
एक एवातियातोऽहं अद्राक्षं विपिनं महत् ।
घोरं प्रतिभयाकारं व्यालोलूकशिवाजिरम् ॥ १४ ॥
परिश्रान्तेन्द्रियात्माहं तृट्परीतो बुभुक्षितः ।
स्नात्वा पीत्वा ह्रदे नद्या उपस्पृष्टो गतश्रमः ॥ १५ ॥
तस्मिन्निर्मनुजेऽरण्ये पिप्पलोपस्थ आश्रितः ।
आत्मनात्मानमात्मस्थं यथाश्रुतमचिन्तयम् ॥ १६ ॥
ध्यायतश्चरणांभोजं भावनिर्जितचेतसा ।
औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः ॥ १७ ॥

प्रेमातिभरनिर्भिन्न पुलकाङ्गोऽतिनिर्वृतः ।
आनंदसंप्लवे लीनो नापश्यमुभयं मुने ॥ १८ ॥
रूपं भगवतो यत्तन् मनःकान्तं शुचापहम् ।
अपश्यन् सहसोत्तस्थे वैक्लव्याद् दुर्मना इव ॥ १९ ॥
दिदृक्षुस्तदहं भूयः प्रणिधाय मनो हृदि ।
वीक्षमाणोऽपि नापश्यं अवितृप्त इवातुरः ॥ २० ॥
एवं यतन्तं विजने मामाहागोचरो गिराम् ।
गंभीरश्लक्ष्णया वाचा शुचः प्रशमयन्निव ॥ २१ ॥
हन्तास्मिन् जन्मनि भवान् मा मां द्रष्टुमिहार्हति ।
अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम् ॥ २२ ॥
सकृद् यद् दर्शितं रूपं एतत्कामाय तेऽनघ ।
मत्कामः शनकैः साधु सर्वान् मुञ्चति हृच्छयान् ॥ २३ ॥
सत्सेवयाऽदीर्घया ते जाता मयि दृढा मतिः ।
हित्वावद्यमिमं लोकं गन्ता मज्जनतामसि ॥ २४ ॥
मतिर्मयि निबद्धेयं न विपद्येत कर्हिचित् ।
प्रजासर्गनिरोधेऽपि स्मृतिश्च मदनुग्रहात् ॥ २५ ॥
(इंद्रवंशा)
एतावदुक्त्वोपरराम तन्महद्
    भूतं नभोलिङ्गमलिङ्गमीश्वरम् ।
अहं च तस्मै महतां महीयसे
    शीर्ष्णावनामं विदधेऽनुकंपितः ॥ २६ ॥
नामान्यनन्तस्य हतत्रपः पठन्
    गुह्यानि भद्राणि कृतानि च स्मरन् ।
गां पर्यटन् तुष्टमना गतस्पृहः
    कालं प्रतीक्षन् विमदो विमत्सरः ॥ २७ ॥
(अनुष्टुप्)
एवं कृष्णमतेर्ब्रह्मन् असक्तस्यामलात्मनः ।
कालः प्रादुरभूत्काले तडित्सौदामनी यथा ॥ २८ ॥
प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम् ।
आरब्धकर्मनिर्वाणो न्यपतत् पांचभौतिकः ॥ २९ ॥
कल्पान्त इदमादाय शयानेऽम्भस्युदन्वतः ।
शिशयिषोरनुप्राणं विविशेऽन्तरहं विभोः ॥ ३० ॥
सहस्रयुगपर्यन्ते उत्थायेदं सिसृक्षतः ।
मरीचिमिश्रा ऋषयः प्राणेभ्योऽहं च जज्ञिरे ॥ ३१ ॥
अंतर्बहिश्च लोकान् त्रीन् पर्येम्यस्कन्दितव्रतः ।
अनुग्रहात् महाविष्णोः अविघातगतिः क्वचित् ॥ ३२ ॥
देवदत्तामिमां वीणां स्वरब्रह्मविभूषिताम् ।
मूर्च्छयित्वा हरिकथां गायमानश्चराम्यहम् ॥ ३३ ॥

प्रगायतः स्ववीर्याणि तीर्थपादः प्रियश्रवाः ।
आहूत इव मे शीघ्रं दर्शनं याति चेतसि ॥ ३४ ॥
एतद्ध्यातुरचित्तानां मात्रास्पर्शेच्छया मुहुः ।
भवसिन्धुप्लवो दृष्टो हरिचर्यानुवर्णनम् ॥ ३५ ॥
यमादिभिर्योगपथैः कामलोभहतो मुहुः ।
मुकुंदसेवया यद्वत् तथात्माद्धा न शाम्यति ॥ ३६ ॥
सर्वं तदिदमाख्यातं यत्पृष्टोऽहं त्वयानघ ।
जन्मकर्मरहस्यं मे भवतश्चात्मतोषणम् ॥ ३७ ॥
सूत उवाच ।
एवं संभाष्य भगवान् नारदो वासवीसुतम् ।
आमंत्र्य वीणां रणयन् ययौ यादृच्छिको मुनिः ॥ ३८ ॥
अहो देवर्षिर्धन्योऽयं यत्कीर्तिं शार्ङ्गधन्वनः ।
गायन्माद्यन्निदं तंत्र्या रमयत्यातुरं जगत् ॥ ३९ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे व्यासनारदसंवादे षष्ठोऽध्यायः ॥। ६ ॥

हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

शौनक उवाच ।
(अनुष्टुप्)
निर्गते नारदे सूत भगवान् बादरायणः ।
श्रुतवांस्तदभिप्रेतं ततः किमकरोद् विभुः ।
सूत उवाच ।
ब्रह्मनद्यां सरस्वत्यां आश्रमः पश्चिमे तटे ।
शम्याप्रास इति प्रोक्त ऋषीणां सत्रवर्धनः ॥। २ ॥
तस्मिन् स्व आश्रमे व्यासो बदरीषण्डमण्डिते ।
आसीनोऽप उपस्पृश्य प्रणिदध्यौ मनः स्वयम् ॥। ३ ॥
भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले ।
अपश्यत् पुरुषं पूर्णं मायां च तदपाश्रयम् ॥। ४ ॥
यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् ।
परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते ॥। ५ ॥
अनर्थोपशमं साक्षाद् भक्तियोगमधोक्षजे ।
लोकस्याजानतो विद्वांन् चक्रे सात्वतसंहिताम् ॥। ६ ॥
यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे ।
भक्तिरुत्पद्यते पुंसः शोकमोहभयापहा ॥। ७ ॥
स संहितां भागवतीं कृत्वानुक्रम्य चात्मजम् ।
शुकं अध्यापयामास निवृत्तिनिरतं मुनिः ॥। ८ ॥
शौनक उवाच ।
स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः ।
कस्य वा बृहतीं एतां आत्मारामः समभ्यसत् ॥ ९ ॥
सूत उवाच ।
आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्ति अहैतुकीं भक्तिं इत्थंभूतगुणो हरिः ॥ १० ॥
हरेर्गुणाक्षिप्तमतिः भगवान् बादरायणिः ।
अध्यगान् महदाख्यानं नित्यं विष्णुजनप्रियः ॥ ११ ॥
परीक्षितोऽथ राजर्षेः जन्मकर्मविलापनम् ।
संस्थां च पाण्डुपुत्राणां वक्ष्ये कृष्णकथोदयम् ॥ १२ ॥
(इंद्रवज्रा)
यदा मृधे कौरवसृञ्जयानां
वीरेष्वथो वीरगतिं गतेषु ।
वृकोदराविद्धगदाभिमर्श
भग्नोरुदण्डे धृतराष्ट्रपुत्रे ॥ १३ ॥
भर्तुः प्रियं द्रौणिरिति स्म पश्यन्
कृष्णासुतानां स्वपतां शिरांसि ।
उपाहरद् विप्रियमेव तस्य
जुगुप्सितं कर्म विगर्हयन्ति ॥ १४ ॥

माता शिशूनां निधनं सुतानां
    निशम्य घोरं परितप्यमाना ।
तदारुदद् बाष्पकलाकुलाक्षी
    तां सांत्वयन्नाह किरीटमाली ॥ १५ ॥
तदा शुचस्ते प्रमृजामि भद्रे
    यद्ब्रह्मबंधोः शिर आततायिनः ।
गाण्डीवमुक्तैः विशिखैरुपाहरे
    त्वाक्रम्य यत्स्नास्यसि दग्धपुत्रा ॥ १६ ॥
(उपेंद्रवज्रा)
इति प्रियां वल्गुविचित्रजल्पैः
    स सान्त्वयित्वाच्युतमित्रसूतः ।
अन्वाद्रवद् दंशित उग्रधन्वा
    कपिध्वजो गुरुपुत्रं रथेन ॥ १७ ॥
तमापतन्तं स विलक्ष्य दूरात्
    कुमारहोद्विग्नमना रथेन ।
पराद्रवत् प्राणपरीप्सुरुर्व्यां
    यावद्गमं रुद्रभयाद् यथार्कः ॥ १८ ॥
(अनुष्टुप्)
यदाशरणमात्मानं ऐक्षत श्रान्तवाजिनम् ।
अस्त्रं ब्रह्मशिरो मेने आत्मत्राणं द्विजात्मजः ॥ १९ ॥
अथोपस्पृश्य सलिलं सन्दधे तत्समाहितः ।
अजानन् उपसंहारं प्राणकृच्छ्र उपस्थिते ॥ २० ॥
ततः प्रादुष्कृतं तेजः प्रचण्डं सर्वतो दिशम् ।
प्राणापदमभिप्रेक्ष्य विष्णुं जिष्णुरुवाच ह ॥ २१ ॥
अर्जुन उवाच ।
कृष्ण कृष्ण महाबाहो भक्तानामभयङ्कर ।
त्वमेको दह्यमानानां अपवर्गोऽसि संसृतेः ॥ २२ ॥
त्वमाद्यः पुरुषः साक्षाद् ईश्वरः प्रकृतेः परः ।
मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि ॥ २३ ॥
स एव जीवलोकस्य मायामोहितचेतसः ।
विधत्से स्वेन वीर्येण श्रेयो धर्मादिलक्षणम् ॥ २४ ॥
तथायं चावतारस्ते भुवो भारजिहीर्षया ।
स्वानां चानन्यभावानां अनुध्यानाय चासकृत् ॥ २५ ॥
किमिदं स्वित्कुतो वेति देवदेव न वेद्म्यहम् ।
सर्वतो मुखमायाति तेजः परमदारुणम् ॥ २६ ॥
श्रीभगवानुवाच ।
वेत्थेदं द्रोणपुत्रस्य ब्राह्ममस्त्रं प्रदर्शितम् ।
नैवासौ वेद संहारं प्राणबाध उपस्थिते ॥ २७ ॥

न ह्यस्यान्यतमं किञ्चिद् अस्त्रं प्रत्यवकर्शनम् ।
जह्यस्त्रतेज उन्नद्धं अस्त्रज्ञो ह्यस्त्रतेजसा ॥ २८ ॥
सूत उवाच ।
श्रुत्वा भगवता प्रोक्तं फाल्गुनः परवीरहा ।
स्पृष्ट्वापस्तं परिक्रम्य ब्राह्मं ब्राह्माय संदधे ॥ २९ ॥
संहत्य अन्योन्यं उभयोः तेजसी शरसंवृते ।
आवृत्य रोदसी खं च ववृधातेऽर्कवह्निवत् ॥ ३० ॥
दृष्ट्वास्त्रतेजस्तु तयोः त्रिँल्लोकान् प्रदहन्महत् ।
दह्यमानाः प्रजाः सर्वाः सांवर्तकममंसत ॥ ३१ ॥
प्रजोपप्लवमालक्ष्य लोकव्यतिकरं च तम् ।
मतं च वासुदेवस्य संजहारार्जुनो द्वयम् ॥ ३२ ॥
तत आसाद्य तरसा दारुणं गौतमीसुतम् ।
बबंधामर्षताम्राक्षः पशुं रशनया यथा ॥ ३३ ॥
शिबिराय निनीषन्तं रज्ज्वा बद्ध्वा रिपुं बलात् ।
प्राहार्जुनं प्रकुपितो भगवान् अंबुजेक्षणः ॥ ३४ ॥
मैनं पार्थार्हसि त्रातुं ब्रह्मबंधुमिमं जहि ।
यो असौ अनागसः सुप्तान् अवधीन्निशि बालकान् ॥ ३५ ॥
मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं स्त्रियं जडम् ।
प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मवित् ॥ ३६ ॥
स्वप्राणान्यः परप्राणैः प्रपुष्णात्यघृणः खलः ।
तद् वधस्तस्य हि श्रेयो यद् दोषाद्यात्यधः पुमान् ॥ ३७ ॥
प्रतिश्रुतं च भवता पाञ्चाल्यै श्रृण्वतो मम ।
आहरिष्ये शिरस्तस्य यस्ते मानिनि पुत्रहा ॥ ३८ ॥
तदसौ वध्यतां पाप आतताय्यात्मबंधुहा ।
भर्तुश्च विप्रियं वीर कृतवान् कुलपांसनः ॥ ३९ ॥
सूत उवाच ।
एवं परीक्षता धर्मं पार्थः कृष्णेन चोदितः ।
नैच्छद् हन्तुं गुरुसुतं यद्यप्यात्महनं महान् ॥ ४० ॥
अथोपेत्य स्वशिबिरं गोविंदप्रियसारथिः ।
न्यवेदयत् तं प्रियायै शोचन्त्या आत्मजान् हतान् ॥ ४१ ॥
(वंशस्थ)
तथाहृतं पशुवत्पाशबद्धं
    अवाङ्मुखं कर्मजुगुप्सितेन ।
निरीक्ष्य कृष्णापकृतं गुरोः सुतं
    वामस्वभावा कृपया ननाम च ॥ ४२ ॥
(अनुष्टुप्)
उवाच चासहन्त्यस्य बंधनानयनं सती ।
मुच्यतां मुच्यतां एष ब्राह्मणो नितरां गुरुः ॥ ४३ ॥

सरहस्यो धनुर्वेदः सविसर्गोपसंयमः ।
अस्त्रग्रामश्च भवता शिक्षितो यदनुग्रहात् ॥ ४४ ॥
स एष भगवान् द्रोणः प्रजारूपेण वर्तते ।
तस्यात्मनोऽर्धं पत्न्याः ते नान्वगाद् वीरसूः कृपी ॥ ४५ ॥
तद् धर्मज्ञ महाभाग भवद्भिः गौरवं कुलम् ।
वृजिनं नार्हति प्राप्तुं पूज्यं वन्द्यमभीक्ष्णशः ॥ ४६ ॥
मा रोदीदस्य जननी गौतमी पतिदेवता ।
यथाहं मृतवत्साऽर्ता रोदिम्यश्रुमुखी मुहुः ॥ ४७ ॥
यैः कोपितं ब्रह्मकुलं राजन्यैरजितात्मभिः ।
तत् कुलं प्रदहत्याशु सानुबंधं शुचार्पितम् ॥ ४८ ॥
सूत उवाच ।
धर्म्यं न्याय्यं सकरुणं निर्व्यलीकं समं महत् ।
राजा धर्मसुतो राज्ञ्याः प्रत्यनंदद् वचो द्विजाः ॥ ४९ ॥
नकुलः सहदेवश्च युयुधानो धनंजयः ।
भगवान् देवकीपुत्रो ये चान्ये याश्च योषितः ॥ ५० ॥
तत्राहामर्षितो भीमः तस्य श्रेयान् वधः स्मृतः ।
न भर्तुर्नात्मनश्चार्थे योऽहन् सुप्तान् शिशून् वृथा ॥ ५१ ॥
निशम्य भीमगदितं द्रौपद्याश्च चतुर्भुजः ।
आलोक्य वदनं सख्युः इदमाह हसन्निव ॥ ५२ ॥
श्रीभगवानुवाच ।
ब्रह्मबंधुर्न हन्तव्य आततायी वधार्हणः ।
मयैवोभयमाम्नातं परिपाह्यनुशासनम् ॥ ५३ ॥
कुरु प्रतिश्रुतं सत्यं यत्तत् सांत्वयता प्रियाम् ।
प्रियं च भीमसेनस्य पाञ्चाल्या मह्यमेव च ॥ ५४ ॥
सूत उवाच ।
अर्जुनः सहसाऽऽज्ञाय हरेर्हार्दमथासिना ।
मणिं जहार मूर्धन्यं द्विजस्य सहमूर्धजम् ॥ ५५ ॥
विमुच्य रशनाबद्धं बालहत्याहतप्रभम् ।
तेजसा मणिना हीनं शिबिरान् निरयापयत् ॥ ५६ ॥
वपनं द्रविणादानं स्थानान् निर्यापणं तथा ।
एष हि ब्रह्मबंधूनां वधो नान्योऽस्ति दैहिकः ॥ ५७ ॥
पुत्रशोकातुराः सर्वे पाण्डवाः सह कृष्णया ।
स्वानां मृतानां यत्कृत्यं चक्रुर्निर्हरणादिकम् ॥ ५८ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे द्रौणिनिग्रहो नाम सप्तमोऽध्यायः ॥। ७ ॥

हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

सूत उवाच ।
(अनुष्टुप्)
अथ ते सम्परेतानां स्वानामुदकमिच्छताम् ।
दातुं सकृष्णा गङ्गायां पुरस्कृत्य ययुः स्त्रियः ॥। १ ॥
ते निनीयोदकं सर्वे विलप्य च भृशं पुनः ।
आप्लुता हरिपादाब्जः अजःपूतसरिज्जले ॥। २ ॥
तत्रासीनं कुरुपतिं धृतराष्ट्रं सहानुजम् ।
गान्धारीं पुत्रशोकार्तां पृथां कृष्णां च माधवः ॥। ३ ॥
सांत्वयामास मुनिभिः हतबंधून् शुचार्पितान् ।
भूतेषु कालस्य गतिं दर्शयन् अप्रतिक्रियाम् ॥। ४ ॥
साधयित्वाजातशत्रोः स्वं राज्यं कितवैर्हृतम् ।
घातयित्वासतो राज्ञः कचस्पर्शक्षतायुषः ॥। ५ ॥
याजयित्वाश्वमेधैस्तं त्रिभिरुत्तमकल्पकैः ।
तद्यशः पावनं दिक्षु शतमन्योरिवातनोत् ॥। ६ ॥
आमंत्र्य पाण्डुपुत्रांश्च शैनेयोद्धवसंयुतः ।
द्वैपायनादिभिर्विप्रैः पूजितैः प्रतिपूजितः ॥। ७ ॥
गन्तुं कृतमतिर्ब्रह्मन् द्वारकां रथमास्थितः ।
उपलेभेऽभिधावन्तीं उत्तरां भयविह्वलाम् ॥। ८ ॥
उत्तरोवाच
पाहि पाहि महायोगिन् देवदेव जगत्पते ।
नान्यं त्वदभयं पश्ये यत्र मृत्युः परस्परम् ॥ ९ ॥
अभिद्रवति मामीश शरस्तप्तायसो विभो ।
कामं दहतु मां नाथ मा मे गर्भो निपात्यताम् ॥ १० ॥
सूत उवाच ।
उपधार्य वचस्तस्या भगवान् भक्तवत्सलः ।
अपाण्डवमिदं कर्तुं द्रौणेरस्त्रमबुध्यत ॥ ११ ॥
तर्ह्येवाथ मुनिश्रेष्ठ पाण्डवाः पञ्च सायकान् ।
आत्मनोऽभिमुखान् दीप्तान् आलक्ष्यास्त्राण्युपाददुः ॥ १२ ॥
व्यसनं वीक्ष्य तत्तेषां अनन्यविषयात्मनाम् ।
सुदर्शनेन स्वास्त्रेण स्वानां रक्षां व्यधाद्विभुः ॥ १३ ॥
अन्तःस्थः सर्वभूतानां आत्मा योगेश्वरो हरिः ।
स्वमाययाऽऽवृणोद्गर्भं वैराट्याः कुरुतन्तवे ॥ १४ ॥
यद्यप्यस्त्रं ब्रह्मशिरः त्वमोघं चाप्रतिक्रियम् ।
वैष्णवं तेज आसाद्य समशाम्यद् भृगूद्वह ॥ १५ ॥
मा मंस्था ह्येतदाश्चर्यं सर्वाश्चर्यमयेऽच्युते ।
य इदं मायया देव्या सृजत्यवति हन्त्यजः ॥ १६ ॥
ब्रह्मतेजोविनिर्मुक्तैः आत्मजैः सह कृष्णया ।
प्रयाणाभिमुखं कृष्णं इदमाह पृथा सती ॥ १७ ॥

कुन्त्युवाच ।
नमस्ये पुरुषं त्वाऽऽद्यं ईश्वरं प्रकृतेः परम् ।
अलक्ष्यं सर्वभूतानां अन्तर्बहिरवस्थितम् ॥ १८ ॥
मायाजवनिकाच्छन्नं अज्ञाधोक्षजमव्ययम् ।
न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा ॥ १९ ॥
तथा परमहंसानां मुनीनां अमलात्मनाम् ।
भक्तियोगविधानार्थं कथं पश्येम हि स्त्रियः ॥ २० ॥
कृष्णाय वासुदेवाय देवकीनंदनाय च ।
नंदगोपकुमाराय गोविंदाय नमो नमः ॥ २१ ॥
नमः पङ्कजनाभाय नमः पङ्कजमालिने ।
नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ॥ २२ ॥
(वंशस्थ)
यथा हृषीकेश खलेन देवकी
    कंसेन रुद्धातिचिरं शुचार्पिता ।
विमोचिताहं च सहात्मजा विभो
    त्वयैव नाथेन मुहुर्विपद्‍गणात् ॥ २३ ॥
विषान्महाग्नेः पुरुषाददर्शनाद्
    असत्सभाया वनवासकृच्छ्रतः ।
मृधे मृधेऽनेकमहारथास्त्रतो
    द्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिताः ॥ २४ ॥
(अनुष्टुप्)
विपदः सन्तु ताः शश्वत् तत्र तत्र जगद्‍गुरो ।
भवतो दर्शनं यत्स्याद् अपुनर्भवदर्शनम् ॥ २५ ॥
जन्मैश्वर्यश्रुतश्रीभिः एधमानमदः पुमान् ।
नैवार्हत्यभिधातुं वै त्वां अकिञ्चनगोचरम् ॥ २६ ॥
नमोऽकिञ्चनवित्ताय निवृत्तगुणवृत्तये ।
आत्मारामाय शान्ताय कैवल्यपतये नमः ॥ २७ ॥
मन्ये त्वां कालमीशानं अनादिनिधनं विभुम् ।
समं चरन्तं सर्वत्र भूतानां यन्मिथः कलिः ॥ २८ ॥
(वंशस्थ)
न वेद कश्चिद् भगवंश्चिकीर्षितं
    तवेहमानस्य नृणां विडम्बनम् ।
न यस्य कश्चिद् दयितोऽस्ति कर्हिचिद्
    द्‍वेष्यश्च यस्मिन्विषमा मतिर्नृणाम् ॥ २९ ॥
(अनुष्टुप्)
जन्म कर्म च विश्वात्मन् अजस्याकर्तुरात्मनः ।
तिर्यङ् नृषिषु यादःसु तद् अत्यन्तविडम्बनम् ॥ ३० ॥
(वसंततिलका)

गोप्याददे त्वयि कृतागसि दाम तावद्
या ते दशाश्रुकलिल अञ्जन संभ्रमाक्षम् ।
वक्त्रं निनीय भयभावनया स्थितस्य
सा मां विमोहयति भीरपि यद्बिभेति ॥ ३१ ॥
(अनुष्टुप्)
केचिद् आहुः अजं जातं पुण्यश्लोकस्य कीर्तये ।
यदोः प्रियस्य अन्ववाये मलयस्येव चन्दनम् ॥ ३२ ॥
अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात् ।
अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम् ॥ ३३ ॥
भारावतारणायान्ये भुवो नाव इवोदधौ ।
सीदन्त्या भूरिभारेण जातो ह्यात्मभुवार्थितः ॥ ३४ ॥
भवेऽस्मिन् क्लिश्यमानानां अविद्याकामकर्मभिः ।
श्रवण स्मरणार्हाणि करिष्यम् इति केचन ॥ ३५ ॥
(वंशस्थ)
श्रृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः ।
त एव पश्यन्त्यचिरेण तावकं
भवप्रवाहोपरमं पदाम्बुजम् ॥ ३६ ॥
अप्यद्य नस्त्वं स्वकृतेहित प्रभो
जिहाससि स्वित् सुहृदोऽनुजीविनः ।
येषां न चान्यत् भवतः पदाम्बुजात्
परायणं राजसु योजितांहसाम् ॥ ३७ ॥
(अनुष्टुप्)
के वयं नामरूपाभ्यां यदुभिः सह पाण्डवाः ।
भवतोऽदर्शनं यर्हि हृषीकाणां इव ईशितुः ॥ ३८ ॥
नेयं शोभिष्यते तत्र यथेदानीं गदाधर ।
त्वत्पदैः अङ्किता भाति स्वलक्षणविलक्षितैः ॥ ३९ ॥
इमे जनपदाः स्वृद्धाः सुपक्वौषधिवीरुधः ।
वनाद्रि नदी उदन्वन्तो ह्येधन्ते तव वीक्षितैः ॥ ४० ॥
अथ विश्वेश विश्वात्मन् विश्वमूर्ते स्वकेषु मे ।
स्नेहपाशं इमं छिन्धि दृढं पाण्डुषु वृष्णिषु ॥ ४१ ॥
त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत् ।
रतिं उद्वहतात् अद्धा गङ्गेवौघं उदन्वति ॥ ४२ ॥
(वसंततिलका)
श्रीकृष्ण कृष्णसख वृष्णि ऋषभावनिध्रुग्
राजन्यवंशदहन अनपवर्ग वीर्य ।
गोविन्द गोद्विजसुरार्तिहरावतार
योगेश्वराखिलगुरो भगवन् नमस्ते ॥ ४३ ॥

सूत उवाच ।
(अनुष्टुप्)
पृथयेत्थं कलपदैः परिणूताखिलोदयः ।
मन्दं जहास वैकुण्ठो मोहयन्निव मायया ॥ ४४ ॥
तां बाढं इति उपामंत्र्य प्रविश्य गजसाह्वयम् ।
स्त्रियश्च स्वपुरं यास्यन् प्रेम्णा राज्ञा निवारितः ॥ ४५ ॥
व्यासाद्यैरीश्वरेहा ज्ञैः कृष्णेनाद्भुतकर्मणा ।
प्रबोधितोऽपि इतिहासैः नाबुध्यत शुचार्पितः ॥ ४६ ॥
आह राजा धर्मसुतः चिन्तयन् सुहृदां वधम् ।
प्राकृतेनात्मना विप्राः स्नेहमोहवशं गतः ॥ ४७ ॥
अहो मे पश्यताज्ञानं हृदि रूढं दुरात्मनः ।
पारक्यस्यैव देहस्य बह्व्यो मेऽक्षौहिणीर्हताः ॥ ४८ ॥
बालद्विजसुहृन् मित्र पितृभ्रातृगुरु द्रुहः ।
न मे स्यात् निरयात् मोक्षो ह्यपि वर्ष अयुत आयुतैः ॥ ४९ ॥
नैनो राज्ञः प्रजाभर्तुः धर्मयुद्धे वधो द्विषाम् ।
इति मे न तु बोधाय कल्पते शासनं वचः ॥ ५० ॥
स्त्रीणां मत् हतबंधूनां द्रोहो योऽसौ इहोत्थितः ।
कर्मभिः गृहमेधीयैः नाहं कल्पो व्यपोहितुम् ॥ ५१ ॥
यथा पङ्केन पङ्काम्भः सुरया वा सुराकृतम् ।
भूतहत्यां तथैवैकां न यज्ञैः मार्ष्टुमर्हति ॥ ५२ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे कुन्तीस्तुतिर्युधिष्ठिरानुतापो नाम अष्टमोऽध्यायः ॥ ८ ॥

हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

सूत उवाच ।
(अनुष्टुप्)
इति भीतः प्रजाद्रोहात् सर्वधर्मविवित्सया ।
ततो विनशनं प्रागाद् यत्र देवव्रतोऽपतत् ॥। १ ॥
तदा ते भ्रातरः सर्वे सदश्वैः स्वर्णभूषितैः ।
अन्वगच्छन् रथैर्विप्रा व्यासधौम्यादयस्तथा ॥। २ ॥
भगवानपि विप्रर्षे रथेन सधनञ्जयः ।
स तैर्व्यरोचत नृपः कुवेर इव गुह्यकैः ॥। ३ ॥
दृष्ट्वा निपतितं भूमौ दिवश्च्युतं इवामरम् ।
प्रणेमुः पाण्डवा भीष्मं सानुगाः सह चक्रिणा ॥। ४ ॥
तत्र ब्रह्मर्षयः सर्वे देवर्षयश्च सत्तम ।
राजर्षयश्च तत्रासन् द्रष्टुं भरतपुङ्गवम् ॥। ५ ॥
पर्वतो नारदो धौम्यो भगवान् बादरायणः ।
बृहदश्वो भरद्वाजः सशिष्यो रेणुकासुतः ॥। ६ ॥
वसिष्ठ इन्द्रप्रमदः त्रितो गृत्समदोऽसितः ।
कक्षीवान् गौतमोऽत्रिश्च कौशिकोऽथ सुदर्शनः ॥। ७ ॥
अन्ये च मुनयो ब्रह्मन् ब्रह्मरातादयोऽमलाः ।
शिष्यैरुपेता आजग्मुः कश्यपाङ्गिरसादयः ॥। ८ ॥
तान् समेतान् महाभागान् उपलभ्य वसूत्तमः ।
पूजयामास धर्मज्ञो देशकालविभागवित् ॥ ९ ॥
कृष्णं च तत्प्रभावज्ञ आसीनं जगदीश्वरम् ।
हृदिस्थं पूजयामास माययोपात्त विग्रहम् ॥ १० ॥
पाण्डुपुत्रान् उपासीनान् प्रश्रयप्रेमसङ्गतान् ।
अभ्याचष्टानुरागाश्रैः अन्धीभूतेन चक्षुषा ॥ ११ ॥
अहो कष्टमहोऽन्याय्यं यद् यूयं धर्मनन्दनाः ।
जीवितुं नार्हथ क्लिष्टं विप्रधर्माच्युताश्रयाः ॥ १२ ॥
संस्थितेऽतिरथे पाण्डौ पृथा बालप्रजा वधूः ।
युष्मत्कृते बहून् क्लेशान् प्राप्ता तोकवती मुहुः ॥ १३ ॥
सर्वं कालकृतं मन्ये भवतां च यदप्रियम् ।
सपालो यद्वशे लोको वायोरिव घनावलिः ॥ १४ ॥
यत्र धर्मसुतो राजा गदापाणिर्वृकोदरः ।
कृष्णोऽस्त्री गाण्डिवं चापं सुहृत् कृष्णः ततो विपत् ॥ १५ ॥
न ह्यस्य कर्हिचित् राजन् पुमान् वेद विधित्सितम् ।
यत् विजिज्ञासया युक्ता मुह्यन्ति कवयोऽपि हि ॥ १६ ॥
तस्मात् इदं दैवतंत्रं व्यवस्य भरतर्षभ ।
तस्यानुविहितोऽनाथा नाथ पाहि प्रजाः प्रभो ॥ १७ ॥
एष वै भगवान् साक्षात् आद्यो नारायणः पुमान् ।
मोहयन् मायया लोकं गूढश्चरति वृष्णिषु ॥ १८ ॥

अस्यानुभावं भगवान् वेद गुह्यतमं शिवः ।
देवर्षिर्नारदः साक्षात् भगवान् कपिलो नृप ॥ १९ ॥
यं मन्यसे मातुलेयं प्रियं मित्रं सुहृत्तमम् ।
अकरोः सचिवं दूतं सौहृदादथ सारथिम् ॥ २० ॥
सर्वात्मनः समदृशो ह्यद्वयस्यानहङ्कृतेः ।
तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित् ॥ २१ ॥
तथाप्येकान्तभक्तेषु पश्य भूपानुकम्पितम् ।
यत् मे असून् त्यजतः साक्षात् कृष्णो दर्शनमागतः ॥ २२ ॥
भक्त्यावेश्य मनो यस्मिन् वाचा यन्नाम कीर्तयन् ।
त्यजन् कलेवरं योगी मुच्यते कामकर्मभिः ॥ २३ ॥
(वंशस्थ)
स देवदेवो भगवान् प्रतीक्षतां
    कलेवरं यावदिदं हिनोम्यहम् ।
प्रसन्नहासारुणलोचनोल्लसन्
    मुखाम्बुजो ध्यानपथश्चतुर्भुजः ॥ २४ ॥
सूत उवाच ।
(अनुष्टुप्)
युधिष्ठिरः तत् आकर्ण्य शयानं शरपञ्जरे ।
अपृच्छत् विविधान् धर्मान् ऋषीणां चानुश्रृण्वताम् ॥ २५ ॥
पुरुषस्वभावविहितान् यथावर्णं यथाश्रमम् ।
वैराग्यराग उपाधिभ्यां आम्नात उभयलक्षणान् ॥ २६ ॥
दानधर्मान् राजधर्मान् मोक्षधर्मान् विभागशः ।
स्त्रीधर्मान् भगवत् धर्मान् समास व्यास योगतः ॥ २७ ॥
धर्मार्थकाममोक्षांश्च सहोपायान् यथा मुने ।
नानाख्यान इतिहासेषु वर्णयामास तत्त्ववित् ॥ २८ ॥
धर्मं प्रवदतस्तस्य स कालः प्रत्युपस्थितः ।
यो योगिनः छन्दमृत्योः वाञ्छितस्तु उत्तरायणः ॥ २९ ॥
(वंशस्थ)
तदोपसंहृत्य गिरः सहस्रणीः
    विमुक्तसङ्गं मन आदिपूरुषे ।
कृष्णे लसत्पीतपटे चतुर्भुजे
    पुरः स्थितेऽमीलित दृग् व्यधारयत् ॥ ३० ॥
विशुद्धया धारणया हताशुभः
    तदीक्षयैवाशु गतायुधश्रमः ।
निवृत्त सर्वेन्द्रिय वृत्ति विभ्रमः
    तुष्टाव जन्यं विसृजन् जनार्दनम् ॥ ३१ ॥
श्रीभीष्म उवाच ।
(पुष्पिताग्रा)

इति मतिरुपकल्पिता वितृष्णा
भगवति सात्वतपुङ्गवे विभूम्नि ।
स्वसुखमुपगते क्वचित् विहर्तुं
प्रकृतिमुपेयुषि यद्भवप्रवाहः ॥ ३२ ॥
त्रिभुवनकमनं तमालवर्णं
रविकरगौरवराम्बरं दधाने ।
वपुरलककुलावृत आननाब्जं
विजयसखे रतिरस्तु मेऽनवद्या ॥ ३३ ॥
युधि तुरगरजो विधूम्र विष्वक्
कचलुलितश्रमवारि अलङ्कृतास्ये ।
मम निशितशरैर्विभिद्यमान
त्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा ॥ ३४ ॥
सपदि सखिवचो निशम्य मध्ये
निजपरयोर्बलयो रथं निवेश्य ।
स्थितवति परसैनिकायुरक्ष्णा
हृतवति पार्थसखे रतिर्ममास्तु ॥ ३५ ॥
व्यवहित पृतनामुखं निरीक्ष्य
स्वजनवधात् विमुखस्य दोषबुद्ध्या ।
कुमतिम अहरत् आत्मविद्यया यः
चश्चरणरतिः परमस्य तस्य मेऽस्तु ॥ ३६ ॥
स्वनिगममपहाय मत्प्रतिज्ञां
ऋतमधि कर्तुमवप्लुतो रथस्थः ।
धृतरथ चरणोऽभ्ययात् चलद्गुः
हरिरिव हन्तुमिभं गतोत्तरीयः ॥ ३७ ॥
शितविशिखहतो विशीर्णदंशः
क्षतजपरिप्लुत आततायिनो मे ।
प्रसभं अभिससार मद्वधार्थं
स भवतु मे भगवान् गतिर्मुकुन्दः ॥ ३८ ॥
विजयरथकुटुम्ब आत्ततोत्रे
धृतहयरश्मिनि तत् श्रियेक्षणीये ।
भगवति रतिरस्तु मे मुमूर्षोः
यमिह निरीक्ष्य हता गताः स्वरूपम् ॥ ३९ ॥
ललित गति विलास वल्गुहास
प्रणय निरीक्षण कल्पितोरुमानाः ।
कृतमनुकृतवत्य उन्मदान्धाः
प्रकृतिमगन् किल यस्य गोपवध्वः ॥ ४० ॥
मुनिगण नृपवर्यसङ्कुलेऽन्तः
सदसि युधिष्ठिर राजसूय एषाम् ।

अर्हणं उपपेद ईक्षणीयो
    मम दृशिगोचर एष आविरात्मा ॥ ४१ ॥
तमिममहमजं शरीरभाजां
    हृदि हृदि धिष्ठितमात्म कल्पितानाम् ।
प्रतिदृशमिव नैकधार्कमेकं
    समधिगतोऽस्मि विधूत भेदमोहः ॥ ४२ ॥
सूत उवाच ।
(अनुष्टुप्)
कृष्ण एवं भगवति मनोवाक् दृष्टिवृत्तिभिः ।
आत्मनि आत्मानमावेश्य सोऽन्तःश्वास उपारमत् ॥ ४३ ॥
सम्पद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले ।
सर्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये ॥ ४४ ॥
तत्र दुन्दुभयो नेदुः देवमानव वादिताः ।
शशंसुः साधवो राज्ञां खात्पेतुः पुष्पवृष्टयः ॥ ४५ ॥
तस्य निर्हरणादीनि सम्परेतस्य भार्गव ।
युधिष्ठिरः कारयित्वा मुहूर्तं दुःखितोऽभवत् ॥ ४६ ॥
तुष्टुवुर्मुनयो हृष्टाः कृष्णं तत् गुह्यनामभिः ।
ततस्ते कृष्णहृदयाः स्वाश्रमान्प्रययुः पुनः ॥ ४७ ॥
ततो युधिष्ठिरो गत्वा सहकृष्णो गजाह्वयम् ।
पितरं सान्त्वयामास गान्धारीं च तपस्विनीम् ॥ ४८ ॥
पित्रा चानुमतो राजा वासुदेवानुमोदितः ।
चकार राज्यं धर्मेण पितृपैतामहं विभुः ॥ ४९ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे युधिष्ठिरराज्यप्रलम्भो नाम नवमोऽध्यायः ॥ ९ ॥

हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

शौनक उवाच ।
(वंशस्थ)
हत्वा स्वरिक्थस्पृध आततायिनो
    युधिष्ठिरो धर्मभृतां वरिष्ठः ।
सहानुजैः प्रत्यवरुद्धभोजनः
    कथं प्रवृत्तः किमकारषीत्ततः ॥ १ ॥
सूत उवाच ।
वंशं कुरोर्वंशदवाग्निनिर्हृतं
    संरोहयित्वा भवभावनो हरिः ।
निवेशयित्वा निजराज्य ईश्वरो
    युधिष्ठिरं प्रीतमना बभूव ह ॥ २ ॥
निशम्य भीष्मोक्तमथाच्युतोक्तं
    प्रवृत्त विज्ञान विधूत विभ्रमः ।
शशास गामिन्द्र इवाजिताश्रयः
    परिध्युपान्तां अनुजानुवर्तितः ॥ ३ ॥
(अनुष्टुप्)
कामं ववर्ष पर्जन्यः सर्वकामदुघा मही ।
सिषिचुः स्म व्रजान् गावः पयसोधस्वतीर्मुदा ॥ ४ ॥
नद्यः समुद्रा गिरयः सवनस्पतिवीरुधः ।
फलन्त्योषधयः सर्वाः कामं अन्वृतु तस्य वै ॥ ५ ॥
नाधयो व्याधयः क्लेशा दैवभूतात्महेतवः ।
अजातशत्रौ अवभवन् जन्तूनां राज्ञि कर्हिचित् ॥ ६ ॥
उषित्वा हास्तिनपुरे मासान् कतिपयान् हरिः ।
सुहृदां च विशोकाय स्वसुश्च प्रियकाम्यया ॥ ७ ॥
आमंत्र्य चाभ्यनुज्ञातः परिष्वज्याभिवाद्य तम् ।
आरुरोह रथं कैश्चित् परिष्वक्तोऽभिवादितः ॥ ८ ॥
सुभद्रा द्रौपदी कुन्ती विराटतनया तथा ।
गान्धारी धृतराष्ट्रश्च युयुत्सुः गौतमो यमौ ॥ ९ ॥
वृकोदरश्च धौम्यश्च स्त्रियो मत्स्यसुतादयः ।
न सेहिरे विमुह्यन्तो विरहं शार्ङ्गधन्वनः ॥ १० ॥
सत्सङ्गात् मुक्तदुःसङ्गो हातुं नोत्सहते बुधः ।
कीर्त्यमानं यशो यस्य सकृत् आकर्ण्य रोचनम् ॥ ११ ॥
तस्मिन् न्यस्तधियः पार्थाः सहेरन् विरहं कथम् ।
दर्शनस्पर्शसंलाप शयनासन भोजनैः ॥ १२ ॥
सर्वे तेऽनिमिषैः अक्षैः तं अनु द्रुतचेतसः ।
वीक्षन्तः स्नेहसम्बद्धा विचेलुस्तत्र तत्र ह ॥ १३ ॥
न्यरुन्धन् उद्गलत् बाष्पं औत्कण्ठ्यात् देवकीसुते ।
निर्यात्यगारात् नोऽभद्रं इति स्यात् बान्धवस्त्रियः ॥ १४ ॥

मृदङ्गशङ्खभेर्यश्च वीणापणव गोमुखाः ।
धुन्धुर्यानक घण्टाद्या नेदुः दुन्दुभयस्तथा ॥ १५ ॥
प्रासादशिखरारूढाः कुरुनार्यो दिदृक्षया ।
ववृषुः कुसुमैः कृष्णं प्रेमव्रीडास्मितेक्षणाः ॥ १६ ॥
सितातपत्रं जग्राह मुक्तादामविभूषितम् ।
रत्नदण्डं गुडाकेशः प्रियः प्रियतमस्य ह ॥ १७ ॥
उद्धवः सात्यकिश्चैव व्यजने परमाद्भुते ।
विकीर्यमाणः कुसुमै रेजे मधुपतिः पथि ॥ १८ ॥
अश्रूयन्ताशिषः सत्याः तत्र तत्र द्विजेरिताः ।
नानुरूपानुरूपाश्च निर्गुणस्य गुणात्मनः ॥ १९ ॥
अन्योन्यमासीत् संजल्प उत्तमश्लोकचेतसाम् ।
कौरवेन्द्रपुरस्त्रीणां सर्वश्रुतिमनोहरः ॥ २० ॥
(वंशस्थ)
स वै किलायं पुरुषः पुरातनो
    य एक आसीदविशेष आत्मनि ।
अग्रे गुणेभ्यो जगदात्मनीश्वरे
    निमीलितात्मन्निशि सुप्तशक्तिषु ॥ २१ ॥
स एव भूयो निजवीर्यचोदितां
    स्वजीवमायां प्रकृतिं सिसृक्षतीम् ।
अनामरूपात्मनि रूपनामनी
    विधित्समानोऽनुससार शास्त्रकृत् ॥ २२ ॥
स वा अयं यत्पदमत्र सूरयो
    जितेन्द्रिया निर्जितमातरिश्वनः ।
पश्यन्ति भक्ति उत्कलितामलात्मना
    नन्वेष सत्त्वं परिमार्ष्टुमर्हति ॥ २३ ॥
स वा अयं सख्यनुगीत सत्कथो
    वेदेषु गुह्येषु च गुह्यवादिभिः ।
य एक ईशो जगदात्मलीलया
    सृजत्यवत्यत्ति न तत्र सज्जते ॥ २४ ॥
यदा ह्यधर्मेण तमोधियो नृपा
    जीवन्ति तत्रैष हि सत्त्वतः किल ।
धत्ते भगं सत्यमृतं दयां यशो
    भवाय रूपाणि दधत् युगे युगे ॥ २५ ॥
अहो अलं श्लाघ्यतमं यदोः कुलं
    अहो अलं पुण्यतमं मधोर्वनम् ।
यदेष पुंसां ऋषभः श्रियः पतिः
    स्वजन्मना चङ्क्रमणेन चाञ्चति ॥ २६ ॥
अहो बत स्वर्यशसः तिरस्करी

कुशस्थली पुण्ययशस्करी भुवः ।
पश्यन्ति नित्यं यदनुग्रहेषितं
स्मितावलोकं स्वपतिं स्म यत्प्रजाः ॥ २७ ॥
नूनं व्रतस्नानहुतादिनेश्वरः
समर्चितो ह्यस्य गृहीतपाणिभिः ।
पिबंति याः सख्यधरामृतं मुहुः
व्रजस्त्रियः सम्मुमुहुः यदाशयाः ॥ २८ ॥
या वीर्यशुल्केन हृताः स्वयंवरे
प्रमथ्य चैद्यः प्रमुखान्हि शुष्मिणः ।
प्रद्युम्न साम्बाम्ब सुतादयोऽपरा
याः चाहृता भौमवधे सहस्रशः ॥ २९ ॥
एताः परं स्त्रीत्वमपास्तपेशलं
निरस्तशौचं बत साधु कुर्वते ।
यासां गृहात् पुष्करलोचनः पतिः
न जातु अपैत्याहृतिभिः हृदि स्पृशन् ॥ ३० ॥
(अनुष्टुप्)
एवंविधा गदन्तीनां स गिरः पुरयोषिताम् ।
निरीक्षणेन अभिनन्दन् सस्मितेन ययौ हरिः ॥ ३१ ॥
अजातशत्रुः पृतनां गोपीथाय मधुद्विषः ।
परेभ्यः शङ्कितः स्नेहात् प्रायुङ्क्त चतुरङ्गिणीम् ॥ ३२ ॥
अथ दूरागतान् शौरिः कौरवान् विरहातुरान् ।
सन्निवर्त्य दृढं स्निग्धान् प्रायात्स्वनगरीं प्रियैः ॥ ३३ ॥
कुरुजाङ्गलपाञ्चालान् शूरसेनान् सयामुनान् ।
ब्रह्मावर्तं कुरुक्षेत्रं मत्स्यान् सारस्वतानथ ॥ ३४ ॥
मरुधन्वमतिक्रम्य सौवीराभीरयोः परान् ।
आनर्तान् भार्गवोपागात् श्रान्तवाहो मनाग्विभुः ॥ ३५ ॥
तत्र तत्र ह तत्रत्यैः हरिः प्रत्युद्यतार्हणः ।
सायं भेजे दिशं पश्चात् गविष्ठो गां गतस्तदा ॥ ३६ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे श्रीकृष्णद्वारकागमनं नाम दशमोऽध्यायः ॥ १० ॥

हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

सूत उवाच ।
आनर्तान् स उपव्रज्य स्वृद्धाञ्जनपदान् स्वकान् ।
दध्मौ दरवरं तेषां विषादं शमयन्निव ॥ १ ॥
स उच्चकाशे धवलोदरो दरोऽपि
    उरुक्रमस्य अधरशोण शोणिमा ।
दाध्मायमानः करकञ्जसम्पुटे
    यथाब्जखण्डे कलहंस उत्स्वनः ॥ २ ॥
तमुपश्रुत्य निनदं जगद्भयभयावहम् ।
प्रत्युद्ययुः प्रजाः सर्वा भर्तृदर्शनलालसाः ॥ ३ ॥
तत्रोपनीतबलयो रवेर्दीपमिवादृताः ।
आत्मारामं पूर्णकामं निजलाभेन नित्यदा ॥ ४ ॥
प्रीत्युत्फुल्लमुखाः प्रोचुः हर्षगद्गदया गिरा ।
पितरं सर्वसुहृदं अवितारं इवार्भकाः ॥ ५ ॥
नताः स्म ते नाथ सदाङ्घ्रिपङ्कजं
    विरिञ्चवैरिञ्च्य सुरेन्द्र वन्दितम् ।
परायणं क्षेममिहेच्छतां परं
    न यत्र कालः प्रभवेत्परः प्रभुः ॥ ६ ॥
भवाय नस्त्वं भव विश्वभावन
    त्वमेव माताथ सुहृत्पतिः पिता ।
त्वं सद्गुरुर्नः परमं च दैवतं
    यस्यानुवृत्त्या कृतिनो बभूविम ॥ ७ ॥
अहो सनाथा भवता स्म यद्वयं
    त्रैविष्टपानामपि दूरदर्शनम् ।
प्रेमस्मित स्निग्ध निरीक्षणाननं
    पश्येम रूपं तव सर्वसौभगम् ॥ ८ ॥
यर्ह्यम्बुजाक्षापससार भो भवान्
    कुरून् मधून् वाथ सुहृद् दिदृक्षया ।
तत्राब्दकोटिप्रतिमः क्षणो भवेद्
    रविं विनाक्ष्णोरिव नस्तवाच्युत ॥ ९ ॥
इति चोदीरिता वाचः प्रजानां भक्तवत्सलः ।
शृण्वानोऽनुग्रहं दृष्ट्या वितन्वन् प्राविशत्पुरम् ॥ १० ॥
मधुभोजदशार्हार्ह कुकुरान्धक वृष्णिभिः ।
आत्मतुल्य बलैर्गुप्तां नागैर्भोगवतीमिव ॥ ११ ॥
सर्वर्तु सर्वविभव पुण्यवृक्षलताश्रमैः ।
उद्यानोपवनारामैः वृत पद्माकर श्रियम् ॥ १२ ॥
गोपुरद्वारमार्गेषु कृतकौतुक तोरणाम् ।
चित्रध्वजपताकाग्रैः अन्तः प्रतिहतातपाम् ॥ १३ ॥
सम्मार्जित महामार्ग रथ्यापणक चत्वराम् ।

सिक्तां गन्धजलैरुप्तां फलपुष्पाक्षताङ्कुरैः ॥ १४ ॥
द्वारि द्वारि गृहाणां च दध्यक्षत फलेक्षुभिः ।
अलङ्कृतां पूर्णकुम्भैः बलिभिः धूपदीपकैः ॥ १५ ॥
निशम्य प्रेष्ठमायान्तं वसुदेवो महामनाः ।
अक्रूरश्चोग्रसेनश्च रामश्चाद्भुतविक्रमः ॥ १६ ॥
प्रद्युम्नः चारुदेष्णश्च साम्बो जाम्बवतीसुतः ।
प्रहर्षवेग उच्छशित शयनासन भोजनाः ॥ १७ ॥
वारणेन्द्रं पुरस्कृत्य ब्राह्मणैः ससुमङ्गलैः ।
शङ्खतूर्य निनादेन ब्रह्मघोषेण चादृताः ।
प्रत्युज्जग्मू रथैर्हृष्टाः प्रणयागत साध्वसाः ॥ १८ ॥
वारमुख्याश्च शतशो यानैः तत् दर्शनोत्सुकाः ।
लसत्कुण्डल निर्भात कपोल वदनश्रियः ॥ १९ ॥
नटनर्तकगन्धर्वाः सूत मागध वन्दिनः ।
गायन्ति चोत्तमश्लोक चरितानि अद्भुतानि च ॥ २० ॥
भगवान् तत्र बन्धूनां पौराणां अनुवर्तिनाम् ।
यथाविधि उपसङ्गम्य सर्वेषां मानमादधे ॥ २१ ॥
प्रह्वाभिवादन आश्लेष करस्पर्श स्मितेक्षणैः ।
आश्वास्य चाश्वपाकेभ्यो वरैश्च अभिमतैर्विभुः ॥ २२ ॥
स्वयं च गुरुभिर्विप्रैः सदारैः स्थविरैरपि ।
आशीर्भिः युज्यमानोऽन्यैः वन्दिभिश्चाविशत् पुरम् ॥ २३ ॥
राजमार्गं गते कृष्णे द्वारकायाः कुलस्त्रियः ।
हर्म्याण्यारुरुहुर्विप्र तदीक्षण महोत्सवाः ॥ २४ ॥
नित्यं निरीक्षमाणानां यदपि द्वारकौकसाम् ।
न वितृप्यन्ति हि दृशः श्रियो धामाङ्गमच्युतम् ॥ २५ ॥
श्रियो निवासो यस्योरः पानपात्रं मुखं दृशाम् ।
बाहवो लोकपालानां सारङ्गाणां पदाम्बुजम् ॥ २६ ॥
सितातपत्रव्यजनैः उपस्कृतः
    नवर्षैः अभिवर्षितः पथि ।
पिशङ्गवासा वनमालया बभौ
    यथार्कोडुप चाप वैद्युतैः ॥ २७ ॥
प्रविष्टस्तु गृहं पित्रोः परिष्वक्तः स्वमातृभिः ।
ववन्दे शिरसा सप्त देवकीप्रमुखा मुदा ॥ २८ ॥
ताः पुत्रमङ्कं आरोप्य स्नेहस्नुत पयोधराः ।
हर्षविह्वलितात्मानः सिषिचुः नेत्रजैर्जलैः ॥ २९ ॥
अथाविशत् स्वभवनं सर्वकाममनुत्तमम् ।
प्रासादा यत्र पत्नीनां सहस्राणि च षोडश ॥ ३० ॥
पत्न्यः पतिं प्रोष्य गृहानुपागतं
    क्य सञ्जात मनोमहोत्सवाः ।

उत्तस्थुरारात् सहसासनाशयात्
    व्रतैः व्रीडित लोचनाननाः ॥ ३१ ॥
तं आत्मजैः दृष्टिभिरन्तरात्मना
    दुरन्तभावाः परिरेभिरे पतिम् ।
निरुद्धमप्यास्रवदम्बु नेत्रयोः
    विलज्जतीनां भृगुवर्य वैक्लवात् ॥ ३२ ॥
यद्यप्यसौ पार्श्वगतो रहोगतः
    तथापि तस्याङ्घ्रियुगं नवं नवम् ।
पदे पदे का विरमेत तत्पदात्
    चलापि यच्छ्रीर्न जहाति कर्हिचित् ॥ ३३ ॥
एवं नृपाणां क्षितिभारजन्मनां
    अक्षौहिणीभिः परिवृत्ततेजसाम् ।
विधाय वैरं श्वसनो यथानलं
    मिथो वधेनोपरतो निरायुधः ॥ ३४ ॥
स एष नरलोकेऽस्मिन् अवतीर्णः स्वमायया ।
रेमे स्त्रीरत्नकूटस्थो भगवान् प्राकृतो यथा ॥ ३५ ॥
उद्दामभाव पिशुनामल वल्गुहास ।
    व्रीडावलोकनिहतो मदनोऽपि यासाम् ॥
सम्मुह्य चापमजहात् प्रमदोत्तमास्ता ।
    यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः ॥ ३६ ॥
तमयं मन्यते लोको ह्यसङ्गमपि सङ्गिनम् ।
आत्मौपम्येन मनुजं व्यापृण्वानं यतोऽबुधः ॥ ३७ ॥
एतत् ईशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः ।
न युज्यते सदाऽत्मस्थैः यथा बुद्धिस्तदाश्रया ॥ ३८ ॥
तं मेनिरेऽबला मूढाः स्त्रैणं चानुव्रतं रहः ।
अप्रमाणविदो भर्तुः ईश्वरं मतयो यथा ॥ ३९ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे नैमिषीयोपाख्याने श्रीकृष्णद्वारकाप्रवेशो नाम एकादशोऽध्यायः ॥ ११ ॥

हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

शौनक उवाच ।
अश्वत्थाम्नोपसृष्टेन ब्रह्मशीर्ष्णोरुतेजसा ।
उत्तराया हतो गर्भ ईशेनाजीवितः पुनः ॥ १ ॥
तस्य जन्म महाबुद्धेः कर्माणि च महात्मनः ।
निधनं च यथैवासीत् स प्रेत्य गतवान् यथा ॥ २ ॥
तदिदं श्रोतुमिच्छामो गदितुं यदि मन्यसे ।
ब्रूहि नः श्रद्दधानानां यस्य ज्ञानमदाच्छुकः ॥ ३ ॥
सूत उवाच ।
अपीपलद्धर्मराजः पितृवद् रञ्जयन् प्रजाः ।
निःस्पृहः सर्वकामेभ्यः कृष्णपादानुसेवया ॥ ४ ॥
सम्पदः क्रतवो लोका महिषी भ्रातरो मही ।
जम्बूद्वीपाधिपत्यं च यशश्च त्रिदिवं गतम् ॥ ५ ॥
किं ते कामाः सुरस्पार्हा मुकुन्दमनसो द्विजाः ।
अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे ॥ ६ ॥
मातुर्गर्भगतो वीरः स तदा भृगुनन्दन ।
ददर्श पुरुषं कञ्चिद् दह्यमानोऽस्त्रतेजसा ॥ ७ ॥
अङ्गुष्ठमात्रममलं स्फुरत् पुरट मौलिनम् ।
अपीव्यदर्शनं श्यामं तडिद् वाससमच्युतम् ॥ ८ ॥
श्रीमद् दीर्घचतुर्बाहुं तप्तकाञ्चन कुण्डलम् ।
क्षतजाक्षं गदापाणिं आत्मनः सर्वतो दिशम् ।
परिभ्रमन्तं उल्काभां भ्रामयन्तं गदां मुहुः ॥ ९ ॥
अस्त्रतेजः स्वगदया नीहारमिव गोपतिः ।
विधमन्तं सन्निकर्षे पर्यैक्षत क इत्यसौ ॥ १० ॥
विधूय तदमेयात्मा भगवान् धर्मगुब् विभुः ।
मिषतो दशमासस्य तत्रैवान्तर्दधे हरिः ॥ ११ ॥
ततः सर्वगुणोदर्के सानुकूल ग्रहोदये ।
जज्ञे वंशधरः पाण्डोः भूयः पाण्डुरिवौजसा ॥ १२ ॥
तस्य प्रीतमना राजा विप्रैर्धौम्य कृपादिभिः ।
जातकं कारयामास वाचयित्वा च मङ्गलम् ॥ १३ ॥
हिरण्यं गां महीं ग्रामान् हस्त्यश्वान् नृपतिर्वरान् ।
प्रादात्स्वन्नं च विप्रेभ्यः प्रजातीर्थे स तीर्थवित् ॥ १४ ॥
तमूचुर्ब्राह्मणास्तुष्टा राजानं प्रश्रयान्वितम् ।
एष ह्यस्मिन् प्रजातन्तौ पुरूणां पौरवर्षभ ॥ १५ ॥
दैवेनाप्रतिघातेन शुक्ले संस्थामुपेयुषि ।
रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना ॥ १६ ॥
तस्मान्नाम्ना विष्णुरात इति लोके बृहच्छ्रवाः ।
भविष्यति न सन्देहो महाभागवतो महान् ॥ १७ ॥
युधिष्ठिर उवाच ।

अप्येष वंश्यान् राजर्षीन् पुण्यश्लोकान् महात्मनः ।
अनुवर्तिता स्विद्यशसा साधुवादेन सत्तमाः ॥ १८ ॥
ब्राह्मणा ऊचुः ।
पार्थ प्रजाविता साक्षात् इक्ष्वाकुरिव मानवः ।
ब्रह्मण्यः सत्यसन्धश्च रामो दाशरथिर्यथा ॥ १९ ॥
एष दाता शरण्यश्च यथा ह्यौशीनरः शिबिः ।
यशो वितनिता स्वानां दौष्यन्तिरिव यज्वनाम् ॥ २० ॥
धन्विनामग्रणीरेष तुल्यश्चार्जुनयोर्द्वयोः ।
हुताश इव दुर्धर्षः समुद्र इव दुस्तरः ॥ २१ ॥
मृगेन्द्र इव विक्रान्तो निषेव्यो हिमवानिव ।
तितिक्षुर्वसुधेवासौ सहिष्णुः पितराविव ॥ २२ ॥
पितामहसमः साम्ये प्रसादे गिरिशोपमः ।
आश्रयः सर्वभूतानां यथा देवो रमाश्रयः ॥ २३ ॥
सर्वसद्गुणमाहात्म्ये एष कृष्णमनुव्रतः ।
रन्तिदेव इवोदारो ययातिरिव धार्मिकः ॥ २४ ॥
धृत्या बलिसमः कृष्णे प्रह्लाद इव सद्ग्रहः ।
आहर्तैषोऽश्वमेधानां वृद्धानां पर्युपासकः ॥ २५ ॥
राजर्षीणां जनयिता शास्ता चोत्पथगामिनाम् ।
निग्रहीता कलेरेष भुवो धर्मस्य कारणात् ॥ २६ ॥
तक्षकादात्मनो मृत्युं द्विजपुत्रोपसर्जितात् ।
प्रपत्स्यत उपश्रुत्य मुक्तसङ्गः पदं हरेः ॥ २७ ॥
जिज्ञासितात्म याथार्थ्यो मुनेर्व्याससुतादसौ ।
हित्वेदं नृप गङ्गायां यास्यत्यद्धा अकुतोभयम् ॥ २८ ॥
इति राज्ञ उपादिश्य विप्रा जातककोविदाः ।
लब्धापचितयः सर्वे प्रतिजग्मुः स्वकान् गृहान् ॥ २९ ॥
स एष लोके विख्यातः परीक्षिदिति यत्प्रभुः ।
पूर्वं दृष्टमनुध्यायन् परीक्षेत नरेष्विह ॥ ३० ॥
स राजपुत्रो ववृधे आशु शुक्ल इवोडुपः ।
आपूर्यमाणः पितृभिः काष्ठाभिरिव सोऽन्वहम् ॥ ३१ ॥
यक्ष्यमाणोऽश्वमेधेन ज्ञातिद्रोहजिहासया ।
राजा लब्धधनो दध्यौ अन्यत्र करदण्डयोः ॥ ३२ ॥
तदभिप्रेतमालक्ष्य भ्रातरोऽच्युतचोदिताः ।
धनं प्रहीणमाजह्रुः उदीच्यां दिशि भूरिशः ॥ ३३ ॥
तेन सम्भृतसम्भारो धर्मपुत्रो युधिष्ठिरः ।
वाजिमेधैः त्रिभिर्भीतो यज्ञैः समयजत् हरिम् ॥ ३४ ॥
आहूतो भगवान् राज्ञा याजयित्वा द्विजैर्नृपम् ।
उवास कतिचित् मासान् सुहृदां प्रियकाम्यया ॥ ३५ ॥
ततो राज्ञाभ्यनुज्ञातः कृष्णया सहबन्धुभिः ।

ययौ द्वारवतीं ब्रह्मन् सार्जुनो यदुभिर्वृतः ॥ ३६ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे नैमिषीयोपाख्याने परीक्षिज्जन्माद्युत्कर्षो नाम द्वादशोऽध्यायः ॥ १२ ॥

हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

सूत उवाच ।
विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम् ।
ज्ञात्वागात् हास्तिनपुरं तयावाप्तविवित्सितः ॥ १ ॥
यावतः कृतवान् प्रश्नान् क्षत्ता कौषारवाग्रतः ।
जातैकभक्तिः गोविन्दे तेभ्यश्चोपरराम ह ॥ २ ॥
तं बन्धुमागतं दृष्ट्वा धर्मपुत्रः सहानुजः ।
धृतराष्ट्रो युयुत्सुश्च सूतः शारद्वतः पृथा ॥ ३ ॥
गान्धारी द्रौपदी ब्रह्मन् सुभद्रा चोत्तरा कृपी ।
अन्याश्च जामयः पाण्डोः ज्ञातयः ससुताः स्त्रियः ॥ ४ ॥
प्रत्युज्जग्मुः प्रहर्षेण प्राणं तन्व इवागतम् ।
अभिसङ्गम्य विधिवत् परिष्वङ्गाभिवादनैः ॥ ५ ॥
मुमुचुः प्रेमबाष्पौघं विरहौत्कण्ठ्य कातराः ।
राजा तमर्हयां चक्रे कृतासन परिग्रहम् ॥ ६ ॥
तं भुक्तवन्तं विश्रान्तं आसीनं सुखमासने ।
प्रश्रयावनतो राजा प्राह तेषां च श‍ृण्वताम् ॥ ७ ॥
युधिष्ठिर उवाच ।
अपि स्मरथ नो युष्मत् पक्षच्छायासमेधितान् ।
विपद्‍गणाद् विषाग्न्यादेः मोचिता यत्समातृकाः ॥ ८ ॥
कया वृत्त्या वर्तितं वः चरद्‌भिः क्षितिमण्डलम् ।
तीर्थानि क्षेत्रमुख्यानि सेवितानीह भूतले ॥ ९ ॥
भवद्‌विधा भागवताः तीर्थभूताः स्वयं विभो ।
तीर्थीकुर्वन्ति तीर्थानि स्वान्तःस्थेन गदाभृता ॥ १० ॥
अपि नः सुहृदस्तात बान्धवाः कृष्णदेवताः ।
दृष्टाः श्रुता वा यदवः स्वपुर्यां सुखमासते ॥ ११ ॥
इत्युक्तो धर्मराजेन सर्वं तत् समवर्णयत् ।
यथानुभूतं क्रमशो विना यदुकुलक्षयम् ॥ १२ ॥
नन्वप्रियं दुर्विषहं नृणां स्वयमुपस्थितम् ।
नावेदयत् सकरुणो दुःखितान् द्रष्टुमक्षमः ॥ १३ ॥
कञ्चित् कालमथ अवात्सीत् सत्कृतो देववत्सुखम् ।
भ्रातुर्ज्येष्ठस्य श्रेयस्कृत् सर्वेषां सुखमावहन् ॥ १४ ॥
अबिभ्रदर्यमा दण्डं यथावत् अघकारिषु ।
यावद् दधार शूद्रत्वं शापात् वर्षशतं यमः ॥ १५ ॥
युधिष्ठिरो लब्धराज्यो दृष्ट्वा पौत्रं कुलन्धरम् ।
भ्रातृभिर्लोकपालाभैः मुमुदे परया श्रिया ॥ १६ ॥
एवं गृहेषु सक्तानां प्रमत्तानां तदीहया ।
अत्यक्रामत् अविज्ञातः कालः परमदुस्तरः ॥ १७ ॥
विदुरस्तत् अभिप्रेत्य धृतराष्ट्रं अभाषत ।
राजन् निर्गम्यतां शीघ्रं पश्येदं भयमागतम् ॥ १८ ॥

प्रतिक्रिया न यस्येह कुतश्चित् कर्हिचित् प्रभो ।
स एष भगवान् कालः सर्वेषां नः समागतः ॥ १९ ॥
येन चैवाभिपन्नोऽयं प्राणैः प्रियतमैरपि ।
जनः सद्यो वियुज्येत किमुतान्यैः धनादिभिः ॥ २० ॥
पितृभ्रातृसुहृत्पुत्रा हतास्ते विगतं वयः ।
आत्मा च जरया ग्रस्तः परगेहमुपाससे ॥ २१ ॥
अहो महीयसी जन्तोः जीविताशा यया भवान् ।
भीमापवर्जितं पिण्डं आदत्ते गृहपालवत् ॥ २२ ॥
अग्निर्निसृष्टो दत्तश्च गरो दाराश्च दूषिताः ।
हृतं क्षेत्रं धनं येषां तद्दत्तैरसुभिः कियत् ॥ २३ ॥
तस्यापि तव देहोऽयं कृपणस्य जिजीविषोः ।
परैत्यनिच्छतो जीर्णो जरया वाससी इव ॥ २४ ॥
गतस्वार्थमिमं देहं विरक्तो मुक्तबन्धनः ।
अविज्ञातगतिः जह्यात् स वै धीर उदाहृतः ॥ २५ ॥
यः स्वकात्परतो वेह जातनिर्वेद आत्मवान् ।
हृदि कृत्वा हरिं गेहात् प्रव्रजेत् स नरोत्तमः ॥ २६ ॥
अथोदीचीं दिशं यातु स्वैरज्ञात गतिर्भवान् ।
इतोऽर्वाक् प्रायशः कालः पुंसां गुणविकर्षणः ॥ २७ ॥
एवं राजा विदुरेणानुजेन
    प्रज्ञाचक्षुर्बोधित आजमीढः ।
छित्त्वा स्वेषु स्नेहपाशान्द्रढिम्नो
    निश्चक्राम भ्रातृसन्दर्शिताध्वा ॥ २८ ॥
पतिं प्रयान्तं सुबलस्य पुत्री
    पतिव्रता चानुजगाम साध्वी ।
हिमालयं न्यस्तदण्डप्रहर्षं
    मनस्विनामिव सत्सम्प्रहारः ॥ २९ ॥
अजातशत्रुः कृतमैत्रो हुताग्निः
    विप्रान् नत्वा तिलगोभूमिरुक्मैः ।
गृहं प्रविष्टो गुरुवन्दनाय
    न चापश्यत् पितरौ सौबलीं च ॥ ३० ॥
तत्र सञ्जयमासीनं पप्रच्छोद्विग्नमानसः ।
गावल्गणे क्व नस्तातो वृद्धो हीनश्च नेत्रयोः ॥ ३१ ॥
अम्बा च हतपुत्राऽऽर्ता पितृव्यः क्व गतः सुहृत् ।
अपि मय्यकृतप्रज्ञे हतबन्धुः स भार्यया ।
आशंसमानः शमलं गङ्गायां दुःखितोऽपतत् ॥ ३२ ॥
पितर्युपरते पाण्डौ सर्वान्नः सुहृदः शिशून् ।
अरक्षतां व्यसनतः पितृव्यौ क्व गतावितः ॥ ३३ ॥
सूत उवाच ।

कृपया स्नेहवैक्लव्यात् सूतो विरहकर्शितः ।
आत्मेश्वरमचक्षाणो न प्रत्याहातिपीडितः ॥ ३४ ॥
विमृज्याश्रूणि पाणिभ्यां विष्टभ्यात्मानमात्मना ।
अजातशत्रुं प्रत्यूचे प्रभोः पादावनुस्मरन् ॥ ३५ ॥
सञ्जय उवाच ।
नाहं वेद व्यवसितं पित्रोर्वः कुलनन्दन ।
गान्धार्या वा महाबाहो मुषितोऽस्मि महात्मभिः ॥ ३७ ॥
अथाजगाम भगवान् नारदः सहतुम्बुरुः ।
प्रत्युत्थायाभिवाद्याह सानुजोऽभ्यर्चयन् मुनिम् ॥ ३८ ॥
युधिष्ठिर उवाच ।
नाहं वेद गतिं पित्रोः भगवन् क्व गतावितः ।
अम्बा वा हतपुत्रार्ता क्व गता च तपस्विनी ॥ ३९ ॥
कर्णधार इवापारे भगवान् पारदर्शकः ।
अथाबभाषे भगवान् नारदो मुनिसत्तमः ॥ ४० ॥
नारद उवाच ।
मा कञ्चन शुचो राजन् यदीश्वरवशं जगत् ।
लोकाः सपाला यस्येमे वहन्ति बलिमीशितुः ।
स संयुनक्ति भूतानि स एव वियुनक्ति च ॥ ४० ॥
यथा गावो नसि प्रोताः तन्त्यां बद्धाः स्वदामभिः ।
वाक्तन्त्यां नामभिर्बद्धा वहन्ति बलिमीशितुः ॥ ४१ ॥
यथा क्रीडोपस्कराणां संयोगविगमाविह ।
इच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम् ॥ ४२ ॥
यन्मन्यसे ध्रुवं लोकं अध्रुवं वा न चोभयम् ।
सर्वथा न हि शोच्यास्ते स्नेहात् अन्यत्र मोहजात् ॥ ४३ ॥
तस्माज्जह्यङ्ग वैक्लव्यं अज्ञानकृतमात्मनः ।
कथं त्वनाथाः कृपणा वर्तेरंस्ते च मां विना ॥ ४४ ॥
कालकर्म गुणाधीनो देहोऽयं पाञ्चभौतिकः ।
कथमन्यांस्तु गोपायेत् सर्पग्रस्तो यथा परम् ॥ ४५ ॥
अहस्तानि सहस्तानां अपदानि चतुष्पदाम् ।
फल्गूनि तत्र महतां जीवो जीवस्य जीवनम् ॥ ४६ ॥
तदिदं भगवान् राजन् एक आत्मात्मनां स्वदृक् ।
अन्तरोऽनन्तरो भाति पश्य तं माययोरुधा ॥ ४७ ॥
सोऽयमद्य महाराज भगवान् भूतभावनः ।
कालरूपोऽवतीर्णोऽस्यां अभावाय सुरद्विषाम् ॥ ४८ ॥
निष्पादितं देवकृत्यं अवशेषं प्रतीक्षते ।
तावद् यूयं अवेक्षध्वं भवेद् यावदिहेश्वरः ॥ ४९ ॥
धृतराष्ट्रः सह भ्रात्रा गान्धार्या च स्वभार्यया ।
दक्षिणेन हिमवत ऋषीणां आश्रमं गतः ॥ ५० ॥

स्रोतोभिः सप्तभिर्या वै स्वर्धुनी सप्तधा व्यधात् ।
सप्तानां प्रीतये नाना सप्तस्रोतः प्रचक्षते ॥ ५१ ॥
स्नात्वानुसवनं तस्मिन् हुत्वा चाग्नीन्यथाविधि ।
अब्भक्ष उपशान्तात्मा स आस्ते विगतैषणः ॥ ५२ ॥
जितासनो जितश्वासः प्रत्याहृतषडिन्द्रियः ।
हरिभावनया ध्वस्तः अजःसत्त्वतमोमलः ॥ ५३ ॥
विज्ञानात्मनि संयोज्य क्षेत्रज्ञे प्रविलाप्य तम् ।
ब्रह्मण्यात्मानमाधारे घटाम्बरमिवाम्बरे ॥ ५४ ॥
ध्वस्तमायागुणोदर्को निरुद्धकरणाशयः ।
निवर्तिताखिलाहार आस्ते स्थाणुरिवाचलः ।
तस्यान्तरायो मैवाभूः सन्न्यस्ताखिलकर्मणः ॥ ५५ ॥
स वा अद्यतनाद् राजन् परतः पञ्चमेऽहनि ।
कलेवरं हास्यति स्वं तच्च भस्मीभविष्यति ॥ ५६ ॥
दह्यमानेऽग्निभिर्देहे पत्युः पत्नी सहोटजे ।
बहिः स्थिता पतिं साध्वी तमग्निमनु वेक्ष्यति ॥ ५७ ॥
विदुरस्तु तदाश्चर्यं निशाम्य कुरुनन्दन ।
हर्षशोकयुतस्तस्माद् गन्ता तीर्थनिषेवकः ॥ ५८ ॥
इत्युक्त्वाथारुहत् स्वर्गं नारदः सहतुम्बुरुः ।
युधिष्ठिरो वचस्तस्य हृदि कृत्वाजहाच्छुचः ॥ ५९ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे नैमिषीयोपाख्याने त्रयोदशोऽध्यायः ॥ १३ ॥

हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

सूत उवाच ।
सम्प्रस्थिते द्वारकायां जिष्णौ बन्धुदिदृक्षया ।
ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥ १ ॥
व्यतीताः कतिचिन्मासाः तदा नायात् ततोऽर्जुनः ।
ददर्श घोररूपाणि निमित्तानि कुरूद्वहः ॥ २ ॥
कालस्य च गतिं रौद्रां विपर्यस्तर्तुधर्मिणः ।
पापीयसीं नृणां वार्तां क्रोधलोभानृतात्मनाम् ॥ ३ ॥
जिह्मप्रायं व्यवहृतं शाठ्यमिश्रं च सौहृदम् ।
पितृमातृसुहृद्भ्रातृ दम्पतीनां च कल्कनम् ॥ ४ ॥
निमित्तान्यत्यरिष्टानि काले तु अनुगते नृणाम् ।
लोभादि अधर्मप्रकृतिं दृष्ट्वोवाचानुजं नृपः ॥ ५ ॥
युधिष्ठिर उवाच ।
सम्प्रेषितो द्वारकायां जिष्णुर्बन्धु दिदृक्षया ।
ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥ ६ ॥
गताः सप्ताधुना मासा भीमसेन तवानुजः ।
नायाति कस्य वा हेतोः नाहं वेदेदमञ्जसा ॥ ७ ॥
अपि देवर्षिणाऽऽदिष्टः स कालोऽयमुपस्थितः ।
यदाऽऽत्मनोऽङ्गमाक्रीडं भगवान् उत्सिसृक्षति ॥ ८ ॥
यस्मान्नः सम्पदो राज्यं दाराः प्राणाः कुलं प्रजाः ।
आसन् सपत्नविजयो लोकाश्च यदनुग्रहात् ॥ ९ ॥
पश्योत्पातान् नरव्याघ्र दिव्यान् भौमान् सदैहिकान् ।
दारुणान्शंसतोऽदूराद् भयं नो बुद्धिमोहनम् ॥ १० ॥
ऊर्वक्षिबाहवो मह्यं स्फुरन्त्यङ्ग पुनः पुनः ।
वेपथुश्चापि हृदये आरात् दास्यन्ति विप्रियम् ॥ ११ ॥
शिवैषोद्यन्तं आदित्यं अभिरौति अनलानना ।
मामङ्ग सारमेयोऽयं अभिरेभत्यभीरुवत् ॥ १२ ॥
शस्ताः कुर्वन्ति मां सव्यं दक्षिणं पशवोऽपरे ।
वाहांश्च पुरुषव्याघ्र लक्षये रुदतो मम ॥ १३ ॥
मृत्युदूतः कपोतोऽयं उलूकः कम्पयन् मनः ।
प्रत्युलूकश्च कुह्वानैः अनिद्रौ शून्यमिच्छतः ॥ १४ ॥
धूम्रा दिशः परिधयः कम्पते भूः सहाद्रिभिः ।
निर्घातश्च महांस्तात साकं च स्तनयित्नुभिः ॥ १५ ॥
वायुर्वाति खरस्पर्शो रजसा विसृजंस्तमः ।
असृग् वर्षन्ति जलदा बीभत्सं इव सर्वतः ॥ १६ ॥
सूर्यं हतप्रभं पश्य ग्रहमर्दं मिथो दिवि ।
ससङ्कुलैर्भूतगणैः ज्वलिते इव रोदसी ॥ १७ ॥
नद्यो नदाश्च क्षुभिताः सरांसि च मनांसि च ।
न ज्वलत्यग्निराज्येन कालोऽयं किं विधास्यति ॥ १८ ॥

न पिबन्ति स्तनं वत्सा न दुह्यन्ति च मातरः ।
रुदन्त्यश्रुमुखा गावो न हृष्यन्ति ऋषभा व्रजे ॥ १९ ॥
दैवतानि रुदन्तीव स्विद्यन्ति ह्युच्चलन्ति च ।
इमे जनपदा ग्रामाः पुरोद्यानाकराश्रमाः ।
भ्रष्टश्रियो निरानन्दाः किमघं दर्शयन्ति नः ॥ २० ॥
मन्य एतैर्महोत्पातैः नूनं भगवतः पदैः ।
अनन्यपुरुषश्रीभिः हीना भूर्हतसौभगा ॥ २१ ॥
इति चिन्तयतस्तस्य दृष्टारिष्टेन चेतसा ।
राज्ञः प्रत्यागमद् ब्रह्मन् यदुपुर्याः कपिध्वजः ॥ २२ ॥
तं पादयोः निपतितं अयथापूर्वमातुरम् ।
अधोवदनं अब्बिन्दून् सृजन्तं नयनाब्जयोः ॥ २३ ॥
विलोक्य उद्विग्नहृदयो विच्छायं अनुजं नृपः ।
पृच्छति स्म सुहृत् मध्ये संस्मरन् नारदेरितम् ॥ २४ ॥
युधिष्ठिर उवाच ।
कच्चिदानर्तपुर्यां नः स्वजनाः सुखमासते ।
मधुभोजदशार्हार्ह सात्वतान्धकवृष्णयः ॥ २५ ॥
शूरो मातामहः कच्चित् स्वस्त्यास्ते वाथ मारिषः ।
मातुलः सानुजः कच्चित् कुशल्यानकदुन्दुभिः ॥ २६ ॥
सप्त स्वसारस्तत्पत्न्यो मातुलान्यः सहात्मजाः ।
आसते सस्नुषाः क्षेमं देवकीप्रमुखाः स्वयम् ॥ २७ ॥
कच्चित् राजाऽऽहुको जीवति असत्पुत्रोऽस्य चानुजः ।
हृदीकः ससुतोऽक्रूरो जयन्तगदसारणाः ॥ २८ ॥
आसते कुशलं कच्चित् ये च शत्रुजिदादयः ।
कच्चिदास्ते सुखं रामो भगवान् सात्वतां प्रभुः ॥ २९ ॥
प्रद्युम्नः सर्ववृष्णीनां सुखमास्ते महारथः ।
गम्भीररयोऽनिरुद्धो वर्धते भगवानुत ॥ ३० ॥
सुषेणश्चारुदेष्णश्च साम्बो जाम्बवतीसुतः ।
अन्ये च कार्ष्णिप्रवराः सपुत्रा ऋषभादयः ॥ ३१ ॥
तथैवानुचराः शौरेः श्रुतदेवोद्धवादयः ।
सुनन्दनन्दशीर्षण्या ये चान्ये सात्वतर्षभाः ॥ ३२ ॥
अपि स्वस्त्यासते सर्वे रामकृष्ण भुजाश्रयाः ।
अपि स्मरन्ति कुशलं अस्माकं बद्धसौहृदाः ॥ ३३ ॥
भगवानपि गोविन्दो ब्रह्मण्यो भक्तवत्सलः ।
कच्चित्पुरे सुधर्मायां सुखमास्ते सुहृद्वृतः ॥ ३४ ॥
मङ्गलाय च लोकानां क्षेमाय च भवाय च ।
आस्ते यदुकुलाम्भोधौ आद्योऽनन्तसखः पुमान् ॥ ३५ ॥
यद्बाहुदण्डगुप्तायां स्वपुर्यां यदवोऽर्चिताः ।
क्रीडन्ति परमानन्दं महापौरुषिका इव ॥ ३६ ॥

यत् पादशुश्रूषणमुख्य कर्मणा
    सत्यादयो द्व्यष्टसहस्रयोषितः ।
निर्जित्य सङ्ख्ये त्रिदशांस्तदाशिषो
    हरन्ति वज्रायुधवल्लभोचिताः ॥ ३७ ॥
यद्बाहुदण्डाभ्युदयानुजीविनो
    यदुप्रवीरा ह्यकुतोभया मुहुः ।
अधिक्रमन्त्यङ्घ्रिभिराहृतां बलात्
    सभां सुधर्मां सुरसत्तमोचिताम् ॥ ३८ ॥
कच्चित्तेऽनामयं तात भ्रष्टतेजा विभासि मे ।
अलब्धमानोऽवज्ञातः किं वा तात चिरोषितः ॥ ३९ ॥
कच्चित् नाभिहतोऽभावैः शब्दादिभिरमङ्गलैः ।
न दत्तमुक्तमर्थिभ्य आशया यत्प्रतिश्रुतम् ॥ ४० ॥
कच्चित्त्वं ब्राह्मणं बालं गां वृद्धं रोगिणं स्त्रियम् ।
शरणोपसृतं सत्त्वं नात्याक्षीः शरणप्रदः ॥ ४१ ॥
कच्चित्त्वं नागमोऽगम्यां गम्यां वासत्कृतां स्त्रियम् ।
पराजितो वाथ भवान् नोत्तमैर्नासमैः पथि ॥ ४२ ॥
अपि स्वित्पर्यभुङ्क्थास्त्वं सम्भोज्यान् वृद्धबालकान् ।
जुगुप्सितं कर्म किञ्चित् कृतवान्न यदक्षमम् ॥ ४३ ॥
कच्चित्प्रेष्ठतमेनाथ हृदयेनात्मबन्धुना ।
शून्योऽस्मि रहितो नित्यं मन्यसे तेऽन्यथा न रुक् ॥ ४४ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे युधिष्टिरवितर्को नाम चतुर्दशोऽध्यायः ॥ १४ ॥

हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

सूत उवाच ।
एवं कृष्णसखः कृष्णो भ्रात्र राज्ञाऽऽविकल्पितः ।
नानाशंकास्पदं रूपं कृष्णविश्लेषकर्षितः ॥१॥

शोकेन शुष्यद्वदनहृत्सरोजो हतप्रभः ।
विभुं तमेवानुध्यायन्नाशक्नोत्प्रतिभाषितूम ॥२॥

कृच्छ्रेण संस्तभ्य शुचः पाणिनाऽऽमृज्य नेत्रयोः ।
परोक्षेण समुन्नद्धप्रणयौत्कण्ठ्यकातरः ॥३॥

सख्य मैत्रीं सौहृदं च सारथ्यादिषु संस्मरन ।
नृपमग्रजमित्याह बाष्पगद्गदया गिरा ॥४॥

अर्जुन उवाच ।
वचिंतोऽहं महाराज हरिणा बन्धुरुपिणा ।
येन मेऽपहृतं तेजो देवविस्मापनं महत ॥५॥

यस्य क्षणवियोगेन लोको ह्यप्रियदर्शनः ।
उक्थेन रहितो ह्योष मृतकः प्रोच्यते यथा ॥६॥

यत्संश्रयाद द्रुपदगेहमुपागतानां राज्ञा स्वयंवरमुखे स्मरदुर्मदानाम ।
तेजो हृतं खलु मयाभिहतश्च मत्स्यः सज्जीकृतेन धनुष्याधिगता च कृष्णा ॥७॥

यत्संनिधावहमु खाण्डवमग्नयेऽदामिन्द्र च सामरगणं तरसा विजित्य ।
लब्धा सभ मयकृताद्भुतशिल्पमाया दिग्भोऽहरन्नृपतयो बलिमध्वरे ते ॥८॥

यत्तेजसा नृपशिरोऽङघ्रिमहन्मखार्थे आर्योऽनुजस्तव गजायुतसत्ववीर्यः ।
तेनाहृताः प्रमथनाथमखाय भूपा यन्मोचितास्तदनयन बलिमध्वरे ते ॥९॥

पत्न्यास्तवधिमखक्लृप्तमहाभिषेकश्लाघिष्ठन्चारुकाबरं कितवैः सभायाम ।
स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्या यस्तत्स्त्रियोऽकृत हतेशविमुक्तकेशाः ॥१०॥

यो नो जुगोप वनमेत्य दुरन्तकृच्छ्राद दुर्वाससोऽरिविहतादयुताग्रभुग यः ।
शाकान्नशिशःटमुपयुज्य यतास्त्रिलोकीं तृप्ताममंस्त सलिले विनिमंग्नसंघः ॥११॥

यत्तेजसाथ भगवान युधि शुलपाणि र्विस्मापितः सगिरिजोऽस्त्रमदान्निजं मे ।
अन्येऽपि चाहममुनैव कलेवरेण प्राप्तो महेन्द्रभवने महदासनार्धम ॥१२॥

तत्रैव मे विहरतो भुजदण्डयुग्मं गाण्डीवलक्षणमरातिवधाय देवाः ।
सेन्द्रा श्रिता यदनुभावितमाजमीढ तेनाहमद्य मुषितः पुरुषेण भूम्र ॥१३॥

यद्वान्धवः कुरुबलाब्धिमनन्तपार मेको रथेन ततरेऽहमतार्यसत्त्वम ।

प्रत्याहृतं बहु धनं च मयो परेषां तेजास्पदं मणीमयं च हृतं शिरोभ्यः ॥१४॥

यो भीष्मकर्णगुरुशल्यमूष्वदभ्र रजन्यवर्यरथमण्डलमन्डितासु ।
अग्रेचरो मम विभो रथयूथपाना मायुर्मनांसि च दृशा सह ओज आर्च्छत ॥१५॥

यद्दोष्षु मा प्राणीहितं गुरुभिष्मकर्ण नप्तृत्रिगर्तशलसैन्धवबाह्निकाद्येः ।
अस्त्राण्यमोघमाहिमानि निरुपिताने नो पस्पृशुर्नृहरिदासमिवासुराणि ॥१६॥

सौत्ये वृतः कुमतिनाऽऽत्मदं ईश्वरो मे यत्पादपद्ममभवाय भजन्ति भव्याः ।
मां श्रान्तवाहमरयो रथिनो भुविष्ठं न प्राहरन यदनुभावनिरस्तचिस्ताः । \१७॥

नर्माण्युदाररुचिरस्मितशोभितानि हे पार्थ हेऽर्जुन सखे कुरुनन्दनेति ।
संजल्पितानि नरदेव हृदिस्पृशानि स्मर्तूर्लुठन्ति हृदयं मम माधवस्य ॥१८॥

शय्यासनाटनविकथनभोजनादि ष्वैक्याद्वयस्य ऋतवानिति विप्रलब्धः ।
सख्युः सखेव पितृवत्तनयस्य सर्वं सेहे महान्महितया कुमतेरघं मे ॥१९॥

सोऽहं नृपेन्द्र रहितः पुरुषोत्तमेन सख्या प्रियेण सुहृदा हृदयने शुन्य ।
अध्वन्युरुक्रमपरिग्रहमंग रक्षन गोपैरसाद्भिबलेव विनिर्जितोऽस्मि ॥२०॥

तद्वै धनुस्त इषवः स रथो हयास्ते सोऽहं रथी नृपतयो यत आनमन्ति ।
सर्व क्षणेन तदभुदसदीशरिक्तं भस्मन हुतं कुहकाराद्धमोवोत्पमुष्याम ॥२१॥

राजंस्त्वयाभिषुष्टांना सुहृदां न सुहृत्पुरेः ।
विप्रशपविमुढांना निघ्नतां मुष्टिभिर्मिथः ॥२२॥

वारुणीं मदिरां पीत्वा मदोन्मथितचेतसाम ।
अजानतामिव्यान्योन्य चतूः पंचावशेषिताः ॥२३॥

प्रायेणैतद भगवत ईश्वरस्य विचेष्टितम ।
मिथो निघ्नन्ति भूतानि भावयन्ति च यन्मिथः ॥२४॥

जलौकसां जले यद्वन्महान्तोऽदन्त्यणीयसः ।
दुर्बलान्बालिनो राजन्महान्तो बलिनो मिथः ॥२५॥

एवं बलिष्ठैर्यदुभिर्महद्भिरितरान विभुः ।
यदुन यदुभिरन्योन्यं भुभारान संजहार ह ॥२६॥

देशकालार्थयुक्तानि हृत्तापोपशमानि च ।
हरन्ति स्मरताश्चित्तं गोविन्दाभिहितानि मे ॥२७॥

सूत उवाच ।

एवं चिन्तयतो जिष्णोः कृष्णपादसरोरुहम ।
सौहार्देनातिगाढेन शान्ताऽऽसीद्विमला मतिः ॥२८॥

वासुदेवांगघ्यनुध्यानपरिबृंहितरंहसा ।
भक्त्या निर्मथिताशेषकषायाधिषणोऽर्जुनः ॥२९॥

गीतं भगवता ज्ञान यत तत संग्राममुर्धनि ।
कालकर्मतमोरुद्धं पुनरध्यगमद विभुः ॥३०॥

विशोको ब्रह्मासम्पत्या संछिन्नद्वैतसंशयः ।
लीनप्रकृतिनैर्गुण्यादलिंगत्वादसम्भवः ॥३१॥

निशम्य भगवन्मार्ग संस्थां यदुकुलस्य च ।
स्वःपथाय मतिं चक्रे निभृतात्मा युधिष्ठिरः ॥३२॥

पृथाप्यनुश्रुत्य धनञ्जययोदितं नाश यदुनां भगवद्गतिं च ताम ।
एकान्तभक्त्या भगवत्यधोक्षजे निवेशितात्मोपराम संसृतेः ॥३३॥

ययाहरद्द भुवो भारं तां तनुं विजहावजः ।
कण्टकं कण्टकेनेव द्वयं चापीशितूः समम ॥३४॥

यथा मत्स्यादिरुपाणि धत्ते जाह्याद यथा नटः ।
भूभरः क्षपितो येन जहौ तच्च कलेवरम ॥३५॥

यदा मुकुन्दो भगवानिमां महीं जहौ स्ततन्वा श्रवणीयसत्कथः ।
तदाहरेवाप्रतिबुद्धचेतसा मधर्महेतूः कलिरन्ववर्तत ॥३६॥

युधिष्ठिरस्तत्पर्सर्पणं बुधः पुरे च राष्ट्रे च गृहे तथाऽऽत्मनि ।
विभग्य लोभानृतजिह्नाहिंसना द्यधर्मचक्रं गमनाय पर्यधात ॥३७॥

स्वराट पौत्रं विनयिनमात्मनः सुसमं गुणैः ।
तोयनीव्याः पतिं भूमेरभ्यषिचंद गजाह्वये ॥३८॥

मथूरायां तथा वज्रं शुरसेनपतिं ततः ।
प्राजापत्यां निरुप्योष्टिमग्नीनपिबदीश्वरः ॥३९॥

विसृज्य तत्र तत सर्व दुकुनलवलयादिकम ।
निर्ममो निरहंकारः संछिन्नाशेषबन्धनः ॥४०॥

वाचं जुहाव मनसि तत्प्राण इतरे च तम ।
मृत्यावपानं सोत्सर्गं तं पंचत्वे ह्याजोहवीत ॥४१॥

त्रेत्वे हुत्वाथ पंचत्वं तच्चेकत्वेऽजुहोन्मुनिः ।
सर्वमात्मन्यजुहवीद ब्रह्मण्यात्मानमव्यये ॥४२॥

चीरवासा निराहारो बद्धवड मुक्तमूर्धजः ।
दर्शयन्नात्मनो रुपं जडोन्मत्तपिशाचवत ॥४३॥

अनपेक्षमाणो निरगादश्रृण्वन्बधिरो यथा ।
उदीचीं प्रविवेशांशं गतपुर्वा महात्मभिः ।
हृदि ब्रह्मा परं ध्यायान्नवर्तेत यतो गतः ॥४४॥

सर्व तमनु निर्जग्मुर्भ्रातरः कृतनिश्चयाः ।
कलिनाधर्ममित्रेण दृष्टा स्पृष्टाः प्रजा भुवि ॥४५॥

ते साधुकृतसर्वार्था ज्ञात्वऽऽत्यन्तिकमातमनः ।
मनसा धारयामासुर्वैकुठचरणाम्बुजम ॥४६॥

तद्धनोद्रिक्यया भक्त्या विशुद्धधिषणाः परे ।
तस्मिन नारायणपदे एकान्तमतयो गतिम ॥४७॥

अवापुर्दुरवापां ते असद्भिर्विषयात्मभिः ।
विहुतकल्मषास्थाने विरजेनात्मनैव हि ॥४८॥

विदुरोऽपि परित्यज्य प्रभासे देहमात्मवान ।
कृष्णावेशेन तच्चितः पितृभिः स्वक्षयं ययौ ॥४९॥

द्रौपदी च तदाऽऽज्ञाय पतीनामनपेक्षताम ।
वासुदेवे भगवति ह्योकान्तमतिराप तम ॥५०॥

यः श्रद्धयैतद भगवत्प्रियाणां पाण्डोः सुतानामिती सम्प्रयाणम ।
श्रुणोत्यलं स्वत्ययनं पवित्रं लब्ध्या हरौ भक्तिमुपैति सिद्धिम ॥५१॥

इति श्रीमद्भगवते महापुराणे पारमहंस्या संहितायं प्रथमस्कन्धे पाण्डवस्वर्गाहणं नाम पंचदशोऽध्यायः ॥१५॥

सूत उवाच
ततः परीक्षिद्द्विजवर्यशिक्षया महीं महाभागवतः शशास ह ।
यथा हि सूत्यामभिजातकोविदाः समादिशन् विप्र महद्गुणस्तथा ॥००१ ॥
स उत्तरस्य तनयामुपयेम इरावतीम् ।
जनमेजयादींश्चतुरस्तस्यामुत्पादयत्सुतान् ॥००२ ॥
आजहाराश्वमेधांस्त्रीन् गङ्गायां भूरिदक्षिणान् ।
शारद्वतं गुरुं कृत्वा देवा यत्राक्षिगोचराः ॥००३ ॥
निजग्राहौजसा वीरः कलिं दिग्विजये क्वचित् ।
नृपलिङ्गधरं शूद्रं घ्नन्तं गोमिथुनं पदा ॥००४ ॥
शौनक उवाच
कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः ।
नृदेवचिह्नधृक्शूद्र कोऽसौ गां यः पदाहनत् ।
तत्कथ्यतां महाभाग यदि कृष्णकथाश्रयम् ॥००५ ॥
अथवास्य पदाम्भोज मकरन्दलिहां सताम् ।
किमन्यैरसदालापैरायुषो यदसद्व्ययः ॥००६ ॥
क्षुद्रायुषां नृणामङ्ग मर्त्यानामृतमिच्छताम् ।
इहोपहूतो भगवान्मृत्युः शामित्रकर्मणि ॥००७ ॥
न कश्चिन्म्रियते तावद्यावदास्त इहान्तकः ।
एतदर्थं हि भगवानाहूतः परमर्षिभिः ।
अहो नृलोके पीयेत हरिलीलामृतं वचः ॥००८ ॥
मन्दस्य मन्दप्रज्ञस्य वयो मन्दायुषश्च वै ।
निद्रया ह्रियते नक्तं दिवा च व्यर्थकर्मभिः ॥००९ ॥
सूत उवाच
यदा परीक्षित्कुरुजाङ्गलेऽवसत्कलिं प्रविष्टं निजचक्रवर्तिते ।
निशम्य वार्तामनतिप्रियां ततः शरासनं संयुगशौण्डिराददे ॥०१० ॥
स्वलङ्कृतं श्यामतुरङ्गयोजितं रथं मृगेन्द्रध्वजमाश्रितः पुरात् ।
वृतो रथाश्वद्विपपत्तियुक्तया स्वसेनया दिग्विजयाय निर्गतः ॥०११ ॥
भद्राश्वं केतुमालं च भारतं चोत्तरान् कुरून् ।
किम्पुरुषादीनि वर्षाणि विजित्य जगृहे बलिम् ॥०१२ ॥
नगरांश्च वनांश्चैव नदीश्च विमलोदकाः ।
पुरुषान् देवकल्पांश्च नारीश्च प्रियदर्शनाः ॥०१३ ॥
अदृष्टपूर्वान् सुभगान् स ददर्श धनञ्जयः ।
सदनानि च शुभ्राणि नारीश्चाप्सरसां निभाः ॥०१४ ॥

तत्र तत्रोपशृण्वानः स्वपूर्वेषां महात्मनाम् ।
प्रगीयमाणं च यशः कृष्णमाहात्म्यसूचकम् ॥०१५ ॥
आत्मानं च परित्रातमश्वत्थाम्नोऽस्त्रतेजसः ।
स्नेहं च वृष्णिपार्थानां तेषां भक्तिं च केशवे ॥०१६ ॥
तेभ्यः परमसन्तुष्टः प्रीत्युज्जृम्भितलोचनः ।
महाधनानि वासांसि ददौ हारान्महामनाः ॥०१७ ॥
सारथ्यपारषदसेवनसख्यदौत्य वीरासनानुगमनस्तवनप्रणामान् ।
स्निग्धेषु पाण्डुषु जगत्प्रणतिं च विष्णोर् भक्तिं करोति नृपतिश्चरणारविन्दे ॥०१८ ॥*
तस्यैवं वर्तमानस्य पूर्वेषां वृत्तिमन्वहम् ।
नातिदूरे किलाश्चर्यं यदासीत्तन्निबोध मे ॥०१९ ॥
धर्मः पदैकेन चरन् विच्छायामुपलभ्य गाम् ।
पृच्छति स्माश्रुवदनां विवत्सामिव मातरम् ॥०२० ॥
धर्म उवाच
कच्चिद्भद्रेऽनामयमात्मनस्ते विच्छायासि म्लायतेषन्मुखेन ।
आलक्षये भवतीमन्तराधिं दूरे बन्धुं शोचसि कञ्चनाम्ब ॥०२१ ॥
पादैर्न्यूनं शोचसि मैकपादमात्मानं वा वृषलैर्भोक्ष्यमाणम् ।
आहो सुरादीन् हृतयज्ञभागान् प्रजा उत स्विन्मघवत्यवर्षति ॥०२२ ॥
अरक्ष्यमाणाः स्त्रिय उर्वि बालान् शोचस्यथो पुरुषादैरिवार्तान् ।
वाचं देवीं ब्रह्मकुले कुकर्मण्यब्रह्मण्ये राजकुले कुलाग्र्यान् ॥०२३ ॥
किं क्षत्रबन्धून् कलिनोपसृष्टान् राष्ट्राणि वा तैरवरोपितानि ।
इतस्ततो वाशनपानवासः स्नानव्यवायोन्मुखजीवलोकम् ॥०२४ ॥
यद्वाम्ब ते भूरिभरावतार कृतावतारस्य हरेर्धरित्रि ।
अन्तर्हितस्य स्मरती विसृष्टा कर्माणि निर्वाणविलम्बितानि ॥०२५ ॥
इदं ममाचक्ष्व तवाधिमूलं वसुन्धरे येन विकर्शितासि ।
कालेन वा ते बलिनां बलीयसा सुरार्चितं किं हृतमम्ब सौभगम् ॥०२६ ॥
धरण्युवाच
भवान् हि वेद तत्सर्वं यन्मां धर्मानुपृच्छसि ।
चतुर्भिर्वर्तसे येन पादैर्लोकसुखावहैः ॥०२७ ॥
सत्यं शौचं दया क्षान्तिस्त्यागः सन्तोष आर्जवम् ।
शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम् ॥०२८ ॥
ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः ।
स्वातन्त्र्यं कौशलं कान्तिर्धैर्यं मार्दवमेव च ॥०२९ ॥
प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः ।

गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहङ्कृतिः ॥०३० ॥
एते चान्ये च भगवन्नित्या यत्र महागुणाः ।
प्रार्थ्या महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित् ॥०३१ ॥
तेनाहं गुणपात्रेण श्रीनिवासेन साम्प्रतम् ।
शोचामि रहितं लोकं पाप्मना कलिनेक्षितम् ॥०३२ ॥
आत्मानं चानुशोचामि भवन्तं चामरोत्तमम् ।
देवान् पितॄनृषीन् साधून् सर्वान् वर्णांस्तथाश्रमान् ॥०३३ ॥
ब्रह्मादयो बहुतिथं यदपाङ्गमोक्ष कामास्तपः समचरन् भगवत्प्रपन्नाः ।
सा श्रीः स्ववासमरविन्दवनं विहाय यत्पादसौभगमलं भजतेऽनुरक्ता ॥०३४ ॥*
तस्याहमब्जकुलिशाङ्कुशकेतुकेतैः श्रीमत्पदैर्भगवतः समलङ्कृताङ्गी ।
त्रीनत्यरोच उपलभ्य ततो विभूतिं लोकान् स मां व्यसृजदुत्स्मयतीं तदन्ते ॥०३५ ॥*
यो वै ममातिभरमासुरवंशराज्ञाम् अक्षौहिणीशतमपानुददात्मतन्त्रः ।
त्वां दुःस्थमूनपदमात्मनि पौरुषेण सम्पादयन् यदुषु रम्यमबिभ्रदङ्गम् ॥०३६ ॥*
का वा सहेत विरहं पुरुषोत्तमस्य प्रेमावलोकरुचिरस्मितवल्गुजल्पैः ।
स्थैर्यं समानमहरन्मधुमानिनीनां रोमोत्सवो मम यदङ्घ्रिविटङ्कितायाः ॥०३७ ॥*
तयोरेवं कथयतोः पृथिवीधर्मयोस्तदा ।
परीक्षिन्नाम राजर्षिः प्राप्तः प्राचीं सरस्वतीम् ॥०३८ ॥

सूत उवाच ।

तत्र गोमिथूनं राजा हन्यमानमनाथवत ।

दण्डहस्तं च वृषलं ददृशे नूपलात्र्छनम ॥१॥

वृषं मृणालधवलं मेहन्तमिव बिभ्यतम ।

वेपमानं पदैकेन सीदन्तं शुद्रताडितम ॥२॥

गां च धर्मदुधां दीनां भृशं शुद्रपदहताम ।

विवत्सां साश्रुवदना क्षामां यवसमिच्चतीम ॥३॥

पप्रच्छ रथामारुढः कार्तस्वरपरिच्छदम ।

मेघगम्भीरया वाचा समारोपितकार्मुकः ॥४॥

कस्त्वं मच्छरणे लोके बलाद्धंस्यबलान बली ।

नरदेवोऽसि वेषेण नटवत्कर्मणाद्विजः ॥५॥

यस्त्वं कृष्णे गते दुरं सह गाण्डीवधन्वना ।

शोच्योऽस्यशोच्यान रहसि प्रहरन वधमर्हसि ॥६॥

त्वं वा मृणालधवलः पादैर्न्यूनः पद चरन ।

वृषरुपेण किं कश्चिद देवो नः परिखेदयन ॥७॥

न जातू पौरवेन्द्राणां दोर्दण्डपरिरम्भिते ।

भुतलेऽनुपतन्त्यस्मिन विना ते प्राणिनां शुचः ॥८॥

मा सौरभेयानुशुचो व्येतू ते वृषलाद भयम ।

मा रोदीरम्ब भद्रं ते खलांना मयि शास्तदि ॥९॥

यस्य राष्ट्रे प्रजाः सर्वास्त्रस्यन्ते साध्व्यसाधुभिः ।

तस्य मत्तस्य नश्यन्ति कीर्तिरायुर्भगो गतिः ॥१०॥

एष राज्ञां परो धर्मो ह्यार्तानामार्तिनिग्रहः ।

अत एनं वधिष्यामि भुतद्रुह्ममसत्तमम ॥११॥

कोऽवृश्चत तव पादांस्त्रीन सौरर्भय चतूष्पद ।

मा भूवस्त्वांदृशा राष्ट्रे राज्ञां कृष्णानुवर्तिनाम ॥१२॥

आख्याहि वृष भद्रं वः साधुनामकृतागसाम ।

आत्मवैरुप्यकर्तारं पार्थाना कीर्तिदुषणम ॥१३॥

जनेऽनागस्यघं युत्र्जनं सर्वतोऽस्य न मद्दभयम ।

साधुनां भद्रमेअ स्यादसाधुदमने कृते ॥१४॥

अनागस्स्विह भुतेषु य आगस्कृन्निरंकुशः ।

आहर्तास्ति भुजं साक्षादमर्त्यस्यापि सांगदम ॥१५॥

राज्ञो हि परमो धर्म स्वधर्मस्थानुपानम ।

शासतोऽन्यान यथाशास्त्रमनापद्यत्पथानिह ॥१६॥

धर्म उवाच ।

एतद वः पाण्डवेयानां युक्तमार्ताभव वचः ।

येषा गुणगणैः कृष्णो दौत्यादौ भगवान कृतः ॥१७॥

न वयं क्लेशाबीजानि यतः स्युः पुरुषर्षभ ।

पुरुषं तं विजानीमो वाक्य भेदविमोहिताः ॥१८॥

केचिद विकल्पवसना आहुरात्मानमात्मनः ।

दैवमन्ये परे कर्म स्वभावमपरे प्रभुम ॥१९॥

अप्रतर्क्यादनिर्देश्यदिति केष्वपि निश्चयः ।

अत्रानुरुपं राजर्षे विमृश स्वमनीषया ॥२०॥

सूत उवाच ।

एवं धर्मे प्रवदति स सम्राड द्विजसत्तम ।

समाहितेन मनसा विखेदः पर्यचष्ट तम ॥२१॥

राजोवाच धर्म ब्रवीषि धर्मोऽसि वृषरूपधृक ।

यदधर्मकृतः स्थान सुचकस्यापि तद्भवेत ॥२२॥

अथवा देवमायाया नुनं गतिरगोचरा ।

चेतसो वचसश्चापि भुतानामिति निश्चयः ॥२३॥

तपः शौचं दया सत्यमिति पादाःकृते कृताः ।

अधर्माशैस्त्रयो भग्नाः स्मयसंगमदैस्तव ॥२४॥

इदानीं धर्म पादस्ते सत्यं निर्वर्तयेद्यतः ।

तं जिघृक्षत्यधर्माऽयमनृतेनैधितः कलिः ॥२५॥

इयं च भूर्भगवता न्यासितोरुभरा सती ।

श्रीमद्भिस्तत्पदन्यासैः सर्वतः कृतकौतूका ॥२६॥

शोचत्यश्रुकला साध्वी दुर्भवोज्झिताधुना ।

अब्रह्याण्या नृपव्याजाः शुद्रा भोक्ष्यन्ति मामिति ॥२७॥

इति धर्म महीं चैव सान्त्वयित्वा महारथः ।

निशातमाददे खंग कलयेऽधर्महेतवे ॥२८॥

तं जिघासुमभिप्रेत्य विहाय नृपलात्र्छनम ।

तत्पादमुलं शिरसा समगाद भयविह्वलः ॥२९॥

पतितं पादयोर्वीक्ष्य कृपया दीनवत्सलः ।

शरण्यो नावधीच्छ्लोक्य आह चेद हसन्निव ॥३०॥

राजोवाच न ते गुडाकेशयशोधराणां बद्धात्र्जलेर्वै भयमस्ति किंचित ।

न वर्तितव्यं भवता कथंचन क्षेत्रे मदीये त्वमधर्मबन्धु ॥३१॥

त्वां वर्तमान नरदेवदेहे ष्वनु प्रवृत्तोऽयमधर्मपुगः ।

लोभोऽनृतं चौर्यमनार्यमंहो ज्येष्ठा च माया कलहश्च दम्भः ॥३२॥

न वर्तितव्यं तदधर्मबन्धो धर्मेण सत्येन च वर्तितव्ये ।

ब्रह्मावर्ते यत्र यजन्ति यज्ञै र्यज्ञेश्वरं यज्ञवितानविज्ञाः ॥३३॥

यस्मिन हरिर्भगवानिज्यमान इज्यामुर्तिर्यजतां शं तनोति ।

कामानमोघान स्थिरजंगमाना मन्तर्बाहिर्वायुरिवैष आत्मा ॥३४॥

सुत उआच ।

परिक्षितैवमादिष्टः स कलिर्जातवेपथूः ।

तमुद्यातासिमाहेदं दण्डपाणिमिवोद्यतम ॥३५॥

कलिरुवाच ।

यत्र क्वचन वत्स्यामि सार्वभौम तवाज्ञया ।

लक्षये तत्र तत्रापि त्वामात्तेषुशरासनम ॥३६॥

तन्मे धर्मभुतां श्रेष्ठ स्थान निर्देष्टुमर्हसि ।

यत्रैण नियतो वत्स्य आतिष्ठंस्तेऽनुशासनम ॥३७॥

सुत उवाच ।

अभ्यर्थितस्तदा तस्मै स्थानादि कलये ददौ ।

द्युतं पाणन स्त्रियः सुना यत्राधर्मश्चतूर्विधः ॥३८॥

पुनश्च याचमानाय जातरुपमदात्प्रभुः ।

ततोऽनृतं मदं कामं रजो वैरं च पंचमम ॥३९॥

अमुनि पंच स्थानानि ह्याधर्मप्रभवः कलिः ।

औत्तरेयेण दत्ताणि न्यवसत तन्निदेशकृतः ॥४०॥

अथैतानि न सेवित बुभुषुः पुरुषःक्वचित ।

विशेषतो धर्मशीलो राजा लोकपतिर्गुरुः ॥४१॥

वृषस्य नष्टस्त्रीन पादान तपः शौचं दयामिति ।

प्रतिसंदध आश्वास्य महीं च समवर्धयत ॥४२॥

स एष एतह्र्याध्यास्त आसनं पार्थिवोचितम ।

पितामहेनोपन्यस्तं राज्ञारण्य्तं विविक्षता ॥४३॥

आस्तेऽधुना स राजर्षिः कौरवेन्द्रश्रियोल्लसन ।

गजाह्वयो महाभागश्चक्रवर्ती बृहच्छ्रवाः ॥४४॥

इत्थम्भूतनुभावोऽयमभिमन्युसुतो नृपः ।

यस्य पालयतः क्षोणीं युयं सत्राय दीक्षिताः ॥४५॥

इति श्रीमद्भागवते महापुराणे पारमंहंस्या संहितायां प्रथमस्कन्धे कलिनिग्रहो नाम सप्तदशोऽध्यायः ॥
१७॥

सूत उवाच ।
यो वै द्रौण्यस्त्रविप्लुष्टो न मातुरुदरे मृतः ।
अनुग्रहाद् भगवतः कृष्णस्याद्भुतकर्मणः ॥ १ ॥
ब्रह्मकोपोत्थिताद् यस्तु तक्षकात् प्राणविप्लवात् ।
न सम्मुमोहोरुभयाद् भगवत्यर्पिताशयः ॥ २ ॥
उत्सृज्य सर्वतः सङ्गं विज्ञाताजितसंस्थितिः ।
वैयासकेर्जहौ शिष्यो गङ्गायां स्वं कलेवरम् ॥ ३ ॥
नोत्तमश्लोकवार्तानां जुषतां तत्कथामृतम् ।
स्यात्सम्भ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुजम् ॥ ४ ॥
तावत्कलिर्न प्रभवेत् प्रविष्टोऽपीह सर्वतः ।
यावदीशो महानुर्व्यां आभिमन्यव एकराट् ॥ ५ ॥
यस्मिन्नहनि यर्ह्येव भगवान् उत्ससर्ज गाम् ।
तदैवेहानुवृत्तोऽसौ अधर्मप्रभवः कलिः ॥ ६ ॥
नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक् ।
कुशलान्याशु सिद्ध्यन्ति नेतराणि कृतानि यत् ॥ ७ ॥
किं नु बालेषु शूरेण कलिना धीरभीरुणा ।
अप्रमत्तः प्रमत्तेषु यो वृको नृषु वर्तते ॥ ८ ॥
उपवर्णितमेतद् वः पुण्यं पारीक्षितं मया ।
वासुदेव कथोपेतं आख्यानं यदपृच्छत ॥ ९ ॥
या याः कथा भगवतः कथनीयोरुकर्मणः ।
गुणकर्माश्रयाः पुम्भिः संसेव्यास्ता बुभूषुभिः ॥ १० ॥
ऋषय ऊचुः
सूत जीव समाः सौम्य शाश्वतीर्विशदं यशः ।
यस्त्वं शंससि कृष्णस्य मर्त्यानां अमृतं हि नः ॥ ११ ॥
कर्मण्यस्मिन् अनाश्वासे धूमधूम्रात्मनां भवान् ।
आपाययति गोविन्द पादपद्मासवं मधु ॥ १२ ॥
तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत् सङ्गिसंगस्य मर्त्यानां किमुताशिषः ॥ १३ ॥
को नाम तृप्येद् रसवित्कथायां
महत्तमैकान्त परायणस्य ।
नान्तं गुणानां अगुणस्य जग्मुः
योगेश्वरा ये भवपाद्ममुख्याः ॥ १४ ॥
तन्नो भवान् वै भगवत्प्रधानो
महत्तमैकान्त परायणस्य ।
हरेरुदारं चरितं विशुद्धं
शुश्रूषतां नो वितनोतु विद्वन् ॥ १५ ॥
स वै महाभागवतः परीक्षिद्
येनापवर्गाख्यमदभ्रबुद्धिः ।

ज्ञानेन वैयासकिशब्दितेन
भेजे खगेन्द्रध्वजपादमूलम् ॥ १६ ॥
तन्नः परं पुण्यमसंवृतार्थं
आख्यानमत्यद्भुत योगनिष्ठम् ।
आख्याह्यनन्ता चरितोपपन्नं
पारीक्षितं भागवताभिरामम् ॥ १७ ॥
सूत उवाच ।
अहो वयं जन्मभृतोऽद्य हास्म
वृद्धानुवृत्त्यापि विलोमजाताः ।
दौष्कुल्यमाधिं विधुनोति शीघ्रं
महत्तमानामभिधानयोगः ॥ १८ ॥
कुतः पुनर्गृणतो नाम तस्य
महत्तमैकान्त परायणस्य ।
योऽनन्तशक्तिः भगवाननन्तो
महद्गुणत्वाद् यमनन्तमाहुः ॥ १९ ॥
एतावतालं ननु सूचितेन
गुणैरसाम्यानतिशायनस्य ।
हित्वेतरान् प्रार्थयतो विभूतिः
यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सोः ॥ २० ॥
अथापि यत्पादनखावसृष्टं
जगद्विरिञ्चोपहृतार्हणाम्भः ।
सेशं पुनात्यन्यतमो मुकुन्दात्
को नाम लोके भगवत्पदार्थः ॥ २१ ॥
यत्रानुरक्ताः सहसैव धीरा
व्यपोह्य देहादिषु सङ्गमूढम् ।
व्रजन्ति तत्पारमहंस्यमन्त्यं
यस्मिन्नहिंसोपशमः स्वधर्मः ॥ २२ ॥
अहं हि पृष्टोऽर्यमणो भवद्भिः
आचक्ष आत्मावगमोऽत्र यावान् ।
नभः पतन्त्यात्मसमं पतत्त्रिणः
तथा समं विष्णुगतिं विपश्चितः ॥ २३ ॥
एकदा धनुरुद्यम्य विचरन्मृगयां वने ।
मृगाननुगतः श्रान्तः क्षुधितस्तृषितो भृशम् ॥ २४ ॥
जलाशयमचक्षाणः प्रविवेश तमाश्रमम् ।
ददर्श मुनिमासीनं शान्तं मीलितलोचनम् ॥ २५ ॥
प्रतिरुद्धेन्द्रियप्राण मनोबुद्धिमुपारतम् ।
स्थानत्रयात्परं प्राप्तं ब्रह्मभूतमविक्रियम् ॥ २६ ॥
विप्रकीर्णजटाच्छन्नं रौरवेणाजिनेन च ।

विशुष्यत्तालुरुदकं तथाभूतमयाचत ॥ २७ ॥
अलब्धतृणभूम्यादिः असम्प्राप्तार्घ्यसूनृतः ।
अवज्ञातं इवात्मानं मन्यमानश्चुकोप ह ॥ २८ ॥
अभूतपूर्वः सहसा क्षुत्तृड्भ्यामर्दितात्मनः ।
ब्राह्मणं प्रत्यभूद्ब्रह्मन् मत्सरो मन्युरेव च ॥ २९ ॥
स तु ब्रह्मऋषेरंसे गतासुमुरगं रुषा ।
विनिर्गच्छन् धनुष्कोट्या निधाय पुरमागत् ॥ ३० ॥
एष किं निभृताशेष करणो मीलितेक्षणः ।
मृषा समाधिराहोस्वित् किं नु स्यात् क्षत्रबन्धुभिः ॥ ३१ ॥
तस्य पुत्रोऽतितेजस्वी विहरन् बालकोऽर्भकैः ।
राज्ञाघं प्रापितं तातं श्रुत्वा तत्रेदमब्रवीत् ॥ ३२ ॥
अहो अधर्मः पालानां पीव्नां बलिभुजामिव ।
स्वामिन्यघं यद् दासानां द्वारपानां शुनामिव ॥ ३३ ॥
ब्राह्मणैः क्षत्रबन्धुर्हि गृहपालो निरूपितः ।
स कथं तद्गृहे द्वाःस्थः सभाण्डं भोक्तुमर्हति ॥ ३४ ॥
कृष्णे गते भगवति शास्तर्युत्पथगामिनाम् ।
तद् भिन्नसेतूनद्याहं शास्मि पश्यत मे बलम् ॥ ३५ ॥
इत्युक्त्वा रोषताम्राक्षो वयस्यान् ऋषिबालकः ।
कौशिक्याप उपस्पृश्य वाग्वज्रं विससर्ज ह ॥ ३६ ॥
इति लङ्घितमर्यादं तक्षकः सप्तमेऽहनि ।
दङ्क्ष्यति स्म कुलाङ्गारं चोदितो मे ततद्रुहम् ॥ ३७ ॥
ततोऽभ्येत्याश्रमं बालो गले सर्पकलेवरम् ।
पितरं वीक्ष्य दुःखार्तो मुक्तकण्ठो रुरोद ह ॥ ३८ ॥
स वा आङ्गिरसो ब्रह्मन् श्रुत्वा सुतविलापनम् ।
उन्मील्य शनकैर्नेत्रे दृष्ट्वा चांसे मृतोरगम् ॥ ३९ ॥
विसृज्य तं च पप्रच्छ वत्स कस्माद्धि रोदिषि ।
केन वा तेऽपकृतं इत्युक्तः स न्यवेदयत् ॥ ४० ॥
निशम्य शप्तमतदर्हं नरेन्द्रं
स ब्राह्मणो नात्मजमभ्यनन्दत् ।
अहो बतांहो महदद्य ते कृतं
अल्पीयसि द्रोह उरुर्दमो धृतः ॥ ४१ ॥
न वै नृभिर्नरदेवं पराख्यं
सम्मातुमर्हस्यविपक्वबुद्धे ।
यत्तेजसा दुर्विषहेण गुप्ता
विन्दन्ति भद्राण्यकुतोभयाः प्रजाः ॥ ४२ ॥
अलक्ष्यमाणे नरदेवनाम्नि
रथाङ्गपाणावयमङ्ग लोकः ।
तदा हि चौरप्रचुरो विनङ्क्ष्यति

अरक्ष्यमाणोऽविव रूथवत् क्षणात् ॥ ४३ ॥
तदद्य नः पापमुपैत्यनन्वयं
यन्नष्टनाथस्य वसोर्विलुम्पकात् ।
परस्परं घ्नन्ति शपन्ति वृञ्जते
पशून् स्त्रियोऽर्थाम् पुरुदस्यवो जनाः ॥ ४४ ॥
तदाऽऽर्यधर्मः प्रविलीयते नृणां
वर्णाश्रमाचारयुतस्त्रयीमयः ।
ततोऽर्थकामाभिनिवेशितात्मनां
शुनां कपीनामिव वर्णसङ्करः ॥ ४५ ॥
धर्मपालो नरपतिः स तु सम्राड् बृहच्छ्रवाः ।
साक्षान् महाभागवतो राजर्षिर्हयमेधयाट् ॥ ४६ ॥
क्षुत्तृट्श्रमयुतो दीनो नैवास्मच्छापमर्हति ॥ ४६.५ ।
अपापेषु स्वभृत्येषु बालेनापक्वबुद्धिना ।
पापं कृतं तद्भगवान् सर्वात्मा क्षन्तुमर्हति ॥ ४७ ॥
तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हता अपि ।
नास्य तत्प्रतिकुर्वन्ति तद्भक्ताः प्रभवोऽपि हि ॥ ४८ ॥
इति पुत्रकृताघेन सोऽनुतप्तो महामुनिः ।
स्वयं विप्रकृतो राज्ञा नैवाघं तदचिन्तयत् ॥ ४९ ॥
प्रायशः साधवो लोके परैर्द्वन्द्वेषु योजिताः ।
न व्यथन्ति न हृष्यन्ति यत आत्मागुणाश्रयः ॥ ५० ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे विप्रशापोपलम्भनं नाम्ना अष्टादशोऽध्यायः ॥ १८ ॥

सूत उवाच ।
महीपतिस्त्वथ तत्कर्म गर्ह्यं
विचिन्तयन् नात्मकृतं सुदुर्मनाः ।
अहो मया नीचमनार्यवत्कृतं
निरागसि ब्रह्मणि गूढतेजसि ॥ १ ॥
ध्रुवं ततो मे कृतदेवहेलनाद्
दुरत्ययं व्यसनं नातिदीर्घात् ।
तदस्तु कामं ह्यघनिष्कृताय मे
यथा न कुर्यां पुनरेवमद्धा ॥ २ ॥
अद्यैव राज्यं बलमृद्धकोशं
प्रकोपितब्रह्मकुलानलो मे ।
दहत्वभद्रस्य पुनर्न मेऽभूत्
पापीयसी धीर्द्विजदेवगोभ्यः ॥ ३ ॥
स चिन्तयन्नित्थमथाशृणोद् यथा
मुनेः सुतोक्तो निर्ऋतिस्तक्षकाख्यः ।
स साधु मेने न चिरेण तक्षका
नलं प्रसक्तस्य विरक्तिकारणम् ॥ ४ ॥
अथो विहायेमममुं च लोकं
विमर्शितौ हेयतया पुरस्तात् ।
कृष्णाङ्घ्रिसेवामधिमन्यमान
उपाविशत् प्रायममर्त्यनद्याम् ॥ ५ ॥
या वै लसच्छ्रीतुलसीविमिश्र
कृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री ।
पुनाति लोकानुभयत्र सेशान्
कस्तां न सेवेत मरिष्यमाणः ॥ ६ ॥
इति व्यवच्छिद्य स पाण्डवेयः
प्रायोपवेशं प्रति विष्णुपद्याम् ।
दधौ मुकुन्दाङ्घ्रिमनन्यभावो
मुनिव्रतो मुक्तसमस्तसङ्गः ॥ ७ ॥
तत्रोपजग्मुर्भुवनं पुनाना
महानुभावा मुनयः सशिष्याः ।
प्रायेण तीर्थाभिगमापदेशैः
स्वयं हि तीर्थानि पुनन्ति सन्तः ॥ ८ ॥
अत्रिर्वसिष्ठश्च्यवनः शरद्वान्
अरिष्टनेमिर्भृगुरङ्गिराश्च ।
पराशरो गाधिसुतोऽथ राम
उतथ्य इन्द्रप्रमदेध्मवाहौ ॥ ९ ॥
मेधातिथिर्देवल आर्ष्टिषेणो

भारद्वाजो गौतमः पिप्पलादः ।
मैत्रेय और्वः कवषः कुम्भयोनिः
द्वैपायनो भगवान् नारदश्च ॥ १० ॥
अन्ये च देवर्षिब्रह्मर्षिवर्या
राजर्षिवर्या अरुणादयश्च ।
नानार्षेयप्रवरान् समेतान्
अभ्यर्च्य राजा शिरसा ववन्दे ॥ ११ ॥
सुखोपविष्टेष्वथ तेषु भूयः
कृतप्रणामः स्वचिकीर्षितं यत् ।
विज्ञापयामास विविक्तचेता
उपस्थितोऽग्रेऽभिगृहीतपाणिः ॥ १२ ॥
राजोवाच
अहो वयं धन्यतमा नृपाणां
महत्तमानुग्रहणीयशीलाः ।
राज्ञां कुलं ब्राह्मणपादशौचाद्
दूराद् विसृष्टं बत गर्ह्यकर्म ॥ १३ ॥
तस्यैव मेऽघस्य परावरेशो
व्यासक्तचित्तस्य गृहेष्वभीक्ष्णम् ।
निर्वेदमूलो द्विजशापरूपो
यत्र प्रसक्तो भयमाशु धत्ते ॥ १४ ॥
तं मोपयातं प्रतियन्तु विप्रा
गङ्गा च देवी धृतचित्तमीशे ।
द्विजोपसृष्टः कुहकस्तक्षको वा
दशत्वलं गायत विष्णुगाथाः ॥ १५ ॥
पुनश्च भूयाद्भगवत्यनन्ते
रतिः प्रसङ्गश्च तदाश्रयेषु ।
महत्सु यां यामुपयामि सृष्टिं
मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः ॥ १६ ॥
इति स्म राजाध्यवसाययुक्तः
प्राचीनमूलेषु कुशेषु धीरः ।
उदङ्मुखो दक्षिणकूल आस्ते
समुद्रपत्न्याः स्वसुतन्यस्तभारः ॥ १७ ॥
एवं च तस्मिन् नरदेवदेवे
प्रायोपविष्टे दिवि देवसङ्घाः ।
प्रशस्य भूमौ व्यकिरन् प्रसूनैः
मुदा मुहुर्दुन्दुभयश्च नेदुः ॥ १८ ॥
महर्षयो वै समुपागता ये
प्रशस्य साध्वित्यनुमोदमानाः ।

ऊचुः प्रजानुग्रहशीलसारा
यदुत्तमश्लोकगुणाभिरूपम् ॥ १९ ॥
न वा इदं राजर्षिवर्य चित्रं
भवत्सु कृष्णं समनुव्रतेषु ।
येऽध्यासनं राजकिरीटजुष्टं
सद्यो जहुर्भगवत्पार्श्वकामाः ॥ २० ॥
सर्वे वयं तावदिहास्महेऽद्य
कलेवरं यावदसौ विहाय ।
लोकं परं विरजस्कं विशोकं
यास्यत्ययं भागवतप्रधानः ॥ २१ ॥
आश्रुत्य तद् ऋषिगणवचः परीक्षित्
समं मधुच्युद् गुरु चाव्यलीकम् ।
आभाषतैनानभिनन्द्य युक्तान्
शुश्रूषमाणश्चरितानि विष्णोः ॥ २२ ॥
समागताः सर्वत एव सर्वे
वेदा यथा मूर्तिधरास्त्रिपृष्ठे ।
नेहाथवामुत्र च कश्चनार्थ
ऋते परानुग्रहमात्मशीलम् ॥ २३ ॥
ततश्च वः पृच्छयमिमं विपृच्छे
विश्रभ्य विप्रा इति कृत्यतायाम् ।
सर्वात्मना म्रियमाणैश्च कृत्यं
शुद्धं च तत्रामृशताभियुक्ताः ॥ २४ ॥
तत्राभवद् भगवान् व्यासपुत्रो
यदृच्छया गामटमानोऽनपेक्षः ।
अलक्ष्यलिङ्गो निजलाभतुष्टो
वृतश्च बालैरवधूतवेषः ॥ २५ ॥
तं द्व्यष्टवर्षं सुकुमारपाद
करोरुबाह्वंसकपोलगात्रम् ।
चार्वायताक्षोन्नसतुल्यकर्ण
सुभ्र्वाननं कम्बुसुजातकण्ठम् ॥ २६ ॥
निगूढजत्रुं पृथुतुङ्गवक्षसं
आवर्तनाभिं वलिवल्गूदरं च ।
दिगम्बरं वक्त्रविकीर्णकेशं
प्रलम्बबाहुं स्वमरोत्तमाभम् ॥ २७ ॥
श्यामं सदापीच्यवयोऽङ्गलक्ष्म्या
स्त्रीणां मनोज्ञं रुचिरस्मितेन ।
प्रत्युत्थितास्ते मुनयः स्वासनेभ्यः
तल्लक्षणज्ञा अपि गूढवर्चसम् ॥ २८ ॥

स विष्णुरातोऽतिथय आगताय
  तस्मै सपर्यां शिरसाऽऽजहार ।
ततो निवृत्ता ह्यबुधाः स्त्रियोऽर्भका
  महासने सोपविवेश पूजितः ॥ २९ ॥
स संवृतस्तत्र महान् महीयसां
  ब्रह्मर्षिराजर्षिदेवर्षि सङ्घैः ।
व्यरोचतालं भगवान् यथेन्दुः
  ग्रहर्क्षतारानिकरैः परीतः ॥ ३० ॥
प्रशान्तमासीनमकुण्ठमेधसं
  मुनिं नृपो भागवतोऽभ्युपेत्य ।
प्रणम्य मूर्ध्नावहितः कृताञ्जलिः
  नत्वा गिरा सूनृतयान्वपृच्छत् ॥ ३१ ॥
परीक्षिदुवाच ।
अहो अद्य वयं ब्रह्मन् सत्सेव्याः क्षत्रबन्धवः ।
कृपयातिथिरूपेण भवद्भिस्तीर्थकाः कृताः ॥ ३२ ॥
येषां संस्मरणात् पुंसां सद्यः शुद्ध्यन्ति वै गृहाः ।
किं पुनर्दर्शनस्पर्श पादशौचासनादिभिः ॥ ३३ ॥
सान्निध्यात्ते महायोगिन् पातकानि महान्त्यपि ।
सद्यो नश्यन्ति वै पुंसां विष्णोरिव सुरेतराः ॥ ३४ ॥
अपि मे भगवान् प्रीतः कृष्णः पाण्डुसुतप्रियः ।
पैतृष्वसेयप्रीत्यर्थं तद्गोत्रस्यात्तबान्धवः ॥ ३५ ॥
अन्यथा तेऽव्यक्तगतेः दर्शनं नः कथं नृणाम् ।
नितरां म्रियमाणानां संसिद्धस्य वनीयसः ॥ ३६ ॥
अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम् ।
पुरुषस्येह यत्कार्यं म्रियमाणस्य सर्वथा ॥ ३७ ॥
यच्छ्रोतव्यमथो जप्यं यत्कर्तव्यं नृभिः प्रभो ।
स्मर्तव्यं भजनीयं वा ब्रूहि यद्वा विपर्ययम् ॥ ३८ ॥
नूनं भगवतो ब्रह्मन् गृहेषु गृहमेधिनाम् ।
न लक्ष्यते ह्यवस्थानं अपि गोदोहनं क्वचित् ॥ ३९ ॥
सूत उवाच ।
एवमाभाषितः पृष्टः स राज्ञा श्लक्ष्णया गिरा ।
प्रत्यभाषत धर्मज्ञो भगवान् बादरायणिः ॥ ४० ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
प्रथमस्कन्धे शुकागमनं नाम एकोनविंशोऽध्यायः ॥ १९ ॥

श्रीशुक उवाच ।
वरीयान् एष ते प्रश्नः कृतो लोकहितं नृप ।
आत्मवित् सम्मतः पुंसां श्रोतव्यादिषु यः परः ॥ १ ॥
श्रोतव्यादीनि राजेन्द्र नृणां सन्ति सहस्रशः ।
अपश्यतां आत्मतत्त्वं गृहेषु गृहमेधिनाम् ॥ २ ॥
निद्रया ह्रियते नक्तं व्यवायेन च वा वयः ।
दिवा चार्थेहया राजन् कुटुंबभरणेन वा ॥ ३ ॥
देहापत्यकलत्रादिषु आत्मसैन्येष्वसत्स्वपि ।
तेषां प्रमत्तो निधनं पश्यन्नपि न पश्यति ॥ ४ ॥
तस्माद्भारत सर्वात्मा भगवान् ईश्वरो हरिः ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभयम् ॥ ५ ॥
एतावान् सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया ।
जन्मलाभः परः पुंसां अंते नारायणस्मृतिः ॥ ६ ॥
प्रायेण मुनयो राजन् निवृत्ता विधिषेधतः ।
नैर्गुण्यस्था रमंते स्म गुणानुकथने हरेः ॥ ७ ॥
इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् ।
अधीतवान् द्वापरादौ पितुर्द्वैपायनादहम् ॥ ८ ॥
परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया ।
गृहीतचेता राजर्षे आख्यानं यत् अधीतवान् ॥ ९ ॥
तदहं तेऽभिधास्यामि महापौरुषिको भवान् ।
यस्य श्रद्दधतामाशु स्यान् मुकुंदे मतिः सती ॥ १० ॥
एतन्निर्विद्यमानानां इच्छतां अकुतोभयम् ।
योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम् ॥ ११ ॥
किं प्रमत्तस्य बहुभिः परोक्षैर्हायनैरिह ।
वरं मुहूर्तं विदितं घटते श्रेयसे यतः ॥ १२ ॥
खट्वाङ्गो नाम राजर्षिः ज्ञात्वेयत्तामिहायुषः ।
मुहूर्तात् सर्वं उत्सृज्य गतवान् अभयं हरिम् ॥ १३ ॥
तवाप्येतर्हि कौरव्य सप्ताहं जीविताविधिः ।
उपकल्पय तत्सर्वं तावद् यद् सांपरायिकम् ॥ १४ ॥
अंतकाले तु पुरुष आगते गतसाध्वसः ।
छिन्द्याद् असङ्गशस्त्रेण स्पृहां देहेऽनु ये च तम् ॥ १५ ॥
गृहात् प्रत्प्रव्रजितो धीरः पुण्यतीर्थजलाप्लुतः ।
शुचौ विविक्त आसीनो विधिवत् कल्पितासने ॥ १६ ॥

अभ्यसेन् मनसा शुद्धं त्रिवृद् ब्रह्माक्षरं परम् ।
मनो यच्छेज्जितश्वासो ब्रह्मबीजं अविस्मरन् ॥ १७ ॥
नियच्छेद् विषयेभ्योऽक्षान् मनसा बुद्धिसारथिः ।
मनः कर्मभिराक्षिप्तं शुभार्थे धारयेत् धिया ॥ १८ ॥
तत्रैकावयवं ध्यायेत् अव्युच्छिन्नेन चेतसा ।
मनो निर्विषयं युक्त्वा ततः किञ्चन न स्मरेत् ।
पदं तत्परमं विष्णोः मनो यत्र प्रसीदति ॥ १९ ॥
रजस्तमोभ्यां आक्षिप्तं विमूढं मन आत्मनः ।
यच्छेद्धारणया धीरो हंति या तत्कृतं मलम् ॥ २० ॥
यस्यां सन्धार्यमाणायां योगिनो भक्तिलक्षणः ।
आशु संपद्यते योग आश्रयं भद्रमीक्षतः ॥ २१ ॥
राजोवाच ॥
यथा सन्धार्यते ब्रह्मन् धारणा यत्र सम्मता ।
यादृशी वा हरेदाशु पुरुषस्य मनोमलम् ॥ २२ ॥
श्रीशुक उवाच ।
जितासनो जितश्वासो जितसङ्गो जितेंद्रियः ।
स्थूले भगवतो रूपे मनः सन्धारयेद् धिया ॥ २३ ॥
विशेषस्तस्य देहोऽयं स्थविष्ठश्च स्थवीयसाम् ।
यत्रेदं दृश्यते विश्वं भूतं भव्यं भवच्च सत् ॥ २४ ॥
अण्डकोशे शरीरेऽस्मिन् सप्तावरणसंयुते ।
वैराजः पुरुषो योऽसौ भगवान् धारणाश्रयः ॥ २५ ॥
पातालमेतस्य हि पादमूलं
   पठंति पार्ष्णिप्रपदे रसातलम् ।
महातलं विश्वसृजोऽथ गुल्फौ
   तलातलं वै पुरुषस्य जङ्घे ॥ २६ ॥
द्वे जानुनी सुतलं विश्वमूर्तेः
   ऊरुद्वयं वितलं चातलं च ।
महीतलं तज्जघनं महीपते
   नभस्तलं नाभिसरो गृणन्ति ॥ २७ ॥
उरःस्थलं ज्योतिरनीकमस्य
   ग्रीवा महर्वदनं वै जनोऽस्य ।
तपो रराटीं विदुरादिपुंसः
   सत्यं तु शीर्षाणि सहस्रशीर्ष्णः ॥ २८ ॥

इन्द्रादयो बाहव आसुरुस्राः
   कर्णौ दिशः श्रोत्रममुष्य शब्दः ।
नासत्यदस्रौ परमस्य नासे
   घ्राणोऽस्य गंधो मुखमग्निरिद्धः ॥ २९ ॥
द्यौरक्षिणी चक्षुरभूत्पतङ्गः
   पक्ष्माणि विष्णोरहनी उभे च ।
तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यं
   आपोऽस्य तालू रस एव जिह्वा ॥ ३० ॥
छन्दांस्यनन्तस्य शिरो गृणंति
   दंष्ट्रा यमः स्नेहकला द्विजानि ।
हासो जनोन्मादकरी च माया
   दुरन्तसर्गो यदपाङ्गमोक्षः ॥ ३१ ॥
व्रीडोत्तरौष्ठोऽधर एव लोभो
   धर्मः स्तनोऽधर्मपथोऽस्य पृष्ठम् ।
कस्तस्य मेढ्रं वृषणौ च मित्रौ
   कुक्षिः समुद्रा गिरयोऽस्थिसङ्घाः ॥ ३२ ॥
नद्योऽस्य नाड्योऽथ तनूरुहाणि
   महीरुहा विश्वतनोर्नृपेन्द्र ।
अनन्तवीर्यः श्वसितं मातरिश्वा
   गतिर्वयः कर्म गुणप्रवाहः ॥ ३३ ॥
ईशस्य केशान्न् विदुरम्बुवाहान्
   वासस्तु सन्ध्यां कुरुवर्य भूम्नः ।
अव्यक्तमाहुः हृदयं मनश्च
   स चन्द्रमाः सर्वविकारकोशः ॥ ३४ ॥
विज्ञानशक्तिं महिमामनन्ति
   सर्वात्मनोऽन्तःकरणं गिरित्रम् ।
अश्वाश्वतर्युष्ट्रगजा नखानि
   सर्वे मृगाः पशवः श्रोणिदेशे ॥ ३५ ॥
वयांसि तद् व्याकरणं विचित्रं
   मनुर्मनीषा मनुनो निवासः ।
गंधर्वविद्याधरचारणाप्सरः
   स्वरस्मृतीः असुरानीकवीर्यः ॥ ३६ ॥
ब्रह्माननं क्षत्रभुजो महात्मा

विडूरुरङ्घ्रिश्रितकृष्णवर्णः ।
नानाभिधाभीज्यगणोपपन्नो
द्रव्यात्मकः कर्म वितानयोगः ॥ ३७ ॥
इयान् असौ ईश्वरविग्रहस्य
यः सन्निवेशः कथितो मया ते ।
सन्धार्यतेऽस्मिन् वपुषि स्थविष्ठे
मनः स्वबुद्ध्या न यतोऽस्ति किञ्चित् ॥ ३८ ॥
स सर्वधीवृत्त्यनुभूतसर्व
आत्मा यथा स्वप्नजनेक्षितैकः ।
तं सत्यमानंदनिधिं भजेत
नान्यत्र सज्जेद्यत आत्मपातः ॥ ३९ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
द्वितीयस्कंधे प्रथमोऽध्यायः ॥ १ ॥

श्रीशुक उवाच ।

एवं पुरा धारणयाऽऽत्मयोनिः
   नष्टां स्मृतिं प्रत्यवरुध्य तुष्टात् ।
तथा ससर्जेदममोघदृष्टिः
   यथाप्ययात् प्राक् व्यवसायबुद्धिः ॥ १ ॥

शाब्दस्य हि ब्रह्मण एष पन्था
   यन्नामभिर्ध्यायति धीरपार्थैः ।
परिभ्रमन् तत्र न विन्दतेऽर्थान्
   मायामये वासनया शयानः ॥ २ ॥

अतः कविर्नामसु यावदर्थः
   स्याद् अप्रमत्तो व्यवसायबुद्धिः ।
सिद्धेऽन्यथार्थे न यतेत तत्र
   परिश्रमं तत्र समीक्षमाणः ॥ ३ ॥

सत्यां क्षितौ किं कशिपोः प्रयासैः
   बाहौ स्वसिद्धे ह्युपबर्हणैः किम् ।
सत्यञ्जलौ किं पुरुधान्नपात्र्या
   दिग्वल्कलादौ सति किं दुकूलैः ॥ ४ ॥

चीराणि किं पथि न सन्ति दिशन्ति भिक्षां ।
   नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् ।
रुद्धा गुहाः किमजितोऽवति नोपसन्नान् ।
   कस्माद् भजंति कवयो धनदुर्मदान्धान् ॥ ५ ॥

एवं स्वचित्ते स्वत एव सिद्ध
   आत्मा प्रियोऽर्थो भगवान अनंतः ।
तं निर्वृतो नियतार्थो भजेत
   संसारहेतूपरमश्च यत्र ॥ ६ ॥

कस्तां त्वनादृत्य परानुचिन्तां
   ऋते पशून् असतीं नाम कुर्यात् ।
पश्यञ्जनं पतितं वैतरण्यां
   स्वकर्मजान् परितापान् जुषाणम् ॥ ७ ॥

केचित् स्वदेहान्तर्हृदयावकाशे
   प्रादेशमात्रं पुरुषं वसन्तम् ।
चतुर्भुजं कञ्जरथाङ्गशङ्ख
   गदाधरं धारणया स्मरन्ति ॥ ८ ॥

प्रसन्नवक्त्रं नलिनायतेक्षणं
   कदंबकिञ्जल्कपिशङ्गवाससम् ।
लसन्महारत्नहिरण्मयाङ्गदं
   स्फुरन् महारत्नकिरीटकुण्डलम् ॥ ९ ॥
उन्निद्रहृत्पङ्कजकर्णिकालये
   योगेश्वरास्थापितपादपल्लवम् ।
श्रीलक्षणं कौस्तुभरत्नकन्धरं
   अम्लानलक्ष्म्या वनमालयाचितम् ॥ १० ॥
विभूषितं मेखलयाऽङ्गुलीयकैः
   महाधनैर्नूपुरकङ्कणादिभिः ।
स्निग्धामलाकुञ्चितनीलकुन्तलैः
   विरोचमानाननहासपेशलम् ॥ ११ ॥
अदीनलीलाहसितेक्षणोल्लसद्
   भ्रूभङ्गसंसूचितभूर्यनुग्रहम् ।
ईक्षेत चिन्तामयमेनमीश्वरं
   यावन्मनो धारणयाऽवतिष्ठते ॥ १२ ॥
एकैकशोऽङ्गानि धियानुभावयेत्
   पादादि यावद् हसितं गदाभृतः ।
जितं जितं स्थानमपोह्य धारयेत्
   परं परं शुद्ध्यति धीर्यथा यथा ॥ १३ ॥
यावन्न जायेत परावरेऽस्मिन्
   विश्वेश्वरे द्रष्टरि भक्तियोगः ।
तावत् स्थवीयः पुरुषस्य रूपं
   क्रियावसाने प्रयतः स्मरेत ॥ १४ ॥
स्थिरं सुखं चासनमास्थितो यतिः
   यदा जिहासुरिममङ्ग लोकम् ।
काले च देशे च मनो न सज्जयेत्
   प्राणान् नियच्छेन्मनसा जितासुः ॥ १५ ॥
मनः स्वबुद्ध्याऽमलया नियम्य
   क्षेत्रज्ञ एतां निनयेत् तमात्मनि ।
आत्मानमात्मन्यवरुध्य धीरो
   लब्धोपशान्तिर्विरमेत कृत्यात् ॥ १६ ॥
न यत्र कालोऽनिमिषां परः प्रभुः

कुतो नु देवा जगतां य ईशिरे ।
न यत्र सत्त्वं न रजस्तमश्च
न वै विकारो न महान् प्रधानम् ॥ १७ ॥
परं पदं वैष्णवमामनन्ति
तद् यन्नेति नेतीत्यतदुत्सिसृक्षवः ।
विसृज्य दौरात्म्यमनन्यसौहृदा
हृदोपगुह्यार्हपदं पदे पदे ॥ १८ ॥
इत्थं मुनिस्तूपरमेद् व्यवस्थितो
विज्ञानदृग्वीर्य सुरन्धिताशयः ।
स्वपार्ष्णिनाऽपीड्य गुदं ततोऽनिलं
स्थानेषु षट्सून्नमयेज्जितक्लमः ॥ १९ ॥
नाभ्यां स्थितं हृद्यधिरोप्य तस्माद्
उदुदानगत्योरसि तं नयेन्मुनिः ।
ततोऽनुसन्धाय धिया मनस्वी
स्वतालुमूलं शनकैर्नयेत ॥ २० ॥
तस्माद् भ्रुवोरन्तरमुन्नयेत
निरुद्धसप्तायतनोऽनपेक्षः ।
स्थित्वा मुहूर्तार्धमकुण्ठदृष्टिः
निर्भिद्य मूर्धन् विसृजेत् परं गतः ॥ २१ ॥
यदि प्रयास्यन् नृप पारमेष्ठ्यं
वैहायसानामुत यद् विहारम् ।
अष्टाधिपत्यं गुणसन्निवाये
सहैव गच्छेन्मनसेन्द्रियैश्च ॥ २२ ॥
योगेश्वराणां गतिमाहुरन्तः
बहिस्त्रिलोक्याः पवनान्तरात्मनाम् ।
न कर्मभिस्तां गतिमाप्नुवन्ति
विद्यातपोयोगसमाधिभाजाम् ॥ २३ ॥
वैश्वानरं याति विहायसा गतः
सुषुम्नया ब्रह्मपथेन शोचिषा ।
विधूतकल्कोऽथ हरेरुदस्तात्
प्रयाति चक्रं नृप शैशुमारम् ॥ २४ ॥

[ योऽन्तः पचति भूतानां यस्तपत्यण्डमध्यगः ।
सोऽग्निर्वैश्वानरो मार्गो देवानां पितृणां मुनेः ॥

देवयानं पिङ्गलाभिः हन्येति शतायुषा ।
रात्रीरिडाभिः पितृणां विषुवत्तां सुषुम्नया ॥ ]
These two shlokas are found only in Madhwa school edition and Shri Vijayadhwajatirtha commented on these.

तद्विश्वनाभिं त्वतिवर्त्य विष्णोः
  अणीयसा विरजेनात्मनैकः ।
नमस्कृतं ब्रह्मविदामुपैति
  कल्पायुषो यद् विबुधा रमन्ते ॥ २५ ॥
अथो अनन्तस्य मुखानलेन
  दन्दह्यमानं स निरीक्ष्य विश्वम् ।
निर्याति सिद्धेश्वरयुष्टधिष्ण्यं
  यद् द्वैपरार्ध्यं तदु पारमेष्ठ्यम् ॥ २६ ॥
न यत्र शोको न जरा न मृत्युः
  न आर्तिः न चोद्वेग ऋते कुतश्चित् ।
यच्चित्ततोऽदः कृपयानिदं विदां
  दुरन्तदुःखप्रभवानुदर्शनात् ॥ २७ ॥
ततो विशेषं प्रतिपद्य निर्भयः
  तेनात्मनापोऽनलमूर्तिरत्वरन् ।
ज्योतिर्मयो वायुमुपेत्य काले
  वाय्वात्मना खं बृहदात्मलिङ्गम् ॥ २८ ॥
घ्राणेन गन्धं रसनेन वै रसं
  रूपं च दृष्ट्या श्वसनं त्वचैव ।
श्रोत्रेण चोपेत्य नभोगुणत्वं
  प्राणेन चाकूतिमुपैति योगी ॥ २९ ॥
स भूतसूक्ष्मेन्द्रियसन्निकर्षं
  मनोमयं देवमयं विकार्यम् ।
संसाद्य गत्या सह तेन याति
  विज्ञानतत्त्वं गुणसंनिरोधम् ॥ ३० ॥
तेनात्मनात्मानमुपैति शान्तं
  आनंदमानंदमयोऽवसाने ।
एतां गतिं भागवतीं गतो यः
  स वै पुनर्नेह विषज्जतेऽङ्ग ॥ ३१ ॥
एते सृती ते नृप वेदगीते

त्वयाभिपृष्टे च सनातने च ।
ये वै पुरा ब्रह्मण आह तुष्ट
आराधितो भगवान् वासुदेवः ॥ ३२ ॥
न ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह ।
वासुदेवे भगवति भक्तियोगो यतो भवेत् ॥ ३३ ॥
भगवान्ब्रह्म कात्स्न्र्येन त्रिरन् वीक्ष्य मनीषया ।
तदध्यवस्यत् कूटस्थो रतिरात्मन् यतो भवेत् ॥ ३४ ॥
भगवान् सर्वभूतेषु लक्षितः स्वात्मना हरिः ।
दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैः अनुमापकैः ॥ ३५ ॥
तस्मात् सर्वात्मना राजन् हरिः सर्वत्र सर्वदा ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान् नृणाम् ॥ ३६ ॥
पिबन्ति ये भगवत आत्मनः
सतां कथामृतं श्रवणपुटेषु सम्भृतम् ।
पुनन्ति ते विषयविदूषिताशयं
व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥ ३७ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
द्वितीयस्कंधे द्वितीयोऽध्यायः ॥ २ ॥

श्रीशुक उवाच ।
एवमेतन्निगदितं पृष्टवान् यद् भवान् मम ।
नृणां यन्म्रियमाणानां मनुष्येषु मनीषिणाम् ॥ १ ॥
ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिम् ।
इन्द्रं इन्द्रियकामस्तु प्रजाकामः प्रजापतीन् ॥ २ ॥
देवीं मायां तु श्रीकामः तेजस्कामो विभावसुम् ।
वसुकामो वसून् रुद्रान् वीर्यकामोऽथ वीर्यवान् ॥ ३ ॥
अन्नाद्यकामस्तु अदितिं स्वर्गकामोऽदितेः सुतान् ।
विश्वान् देवान् राज्यकामः साध्यान् संसाधको विशाम् ॥ ४ ॥
आयुष्कामोऽश्विनौ देवौ पुष्टिकाम इलां यजेत् ।
प्रतिष्ठाकामः पुरुषो रोदसी लोकमातरौ ॥ ५ ॥
रूपाभिकामो गन्धर्वान् स्त्रीकामोऽप्सर उर्वशीम् ।
आधिपत्यकामः सर्वेषां यजेत परमेष्ठिनम् ॥ ६ ॥
यज्ञं यजेत् यशस्कामः कोशकामः प्रचेतसम् ।
विद्याकामस्तु गिरिशं दाम्पत्यार्थ उमां सतीम् ॥ ७ ॥
धर्मार्थ उत्तमश्लोकं तन्तुं तन्वन् पितॄन् यजेत् ।
रक्षाकामः पुण्यजनान् ओजस्कामो मरुद्‌गणान् ॥ ८ ॥
राज्यकामो मनून् देवान् निर्‌ऋतिं त्वभिचरन् यजेत् ।
कामकामो यजेत्सोमं अकामः पुरुषं परम् ॥ ९ ॥
अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ १० ॥
एतावानेव यजतां इह निःश्रेयसोदयः ।
भगवत्यचलो भावो यद्‌भागवतसङ्‌गतः ॥ ११ ॥
ज्ञानं यदाप्रतिनिवृत्तगुणोर्मिचक्रम् ।
आत्मप्रसाद उत यत्र गुणेष्वसङ्‌गः ।
कैवल्यसम्मतपथस्त्वथ भक्तियोगः ।
को निर्वृतो हरिकथासु रतिं न कुर्यात् ॥ १२ ॥
शौनक उवाच ।
इत्यभिव्याहृतं राजा निशम्य भरतर्षभः ।
किमन्यत् पृष्टवान् भूयो वैयासकिं ऋषिं कविम् ॥ १३ ॥
एतद् शुश्रूषतां विद्वन् सूत नोऽर्हसि भाषितुम् ।
कथा हरिकथोदर्काः सतां स्युः सदसि ध्रुवम् ॥ १४ ॥
स वै भागवतो राजा पाण्डवेयो महारथः ।

बालक्रीडनकैः क्रीडन् कृष्णक्रीडां य आददे ॥ १५ ॥
वैयासकिश्च भगवान् वासुदेवपरायणः ।
उरुगायगुणोदाराः सतां स्युर्हि समागमे ॥ १६ ॥
आयुर्हरति वै पुंसां उद्यन्नस्तं च यन्नसौ ।
तस्यर्ते यत्क्षणो नीत उत्तमश्लोकवार्तया ॥ १७ ॥
तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत ।
न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे ॥ १८ ॥
श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः ।
न यत्कर्णपथोपेतो जातु नाम गदाग्रजः ॥ १९ ॥
बिले बतोरुक्रमविक्रमान् ये
   न शृण्वतः कर्णपुटे नरस्य ।
जिह्वासती दार्दुरिकेव सूत
   न चोपगायत्युरुगायगाथाः ॥ २० ॥
भारः परं पट्टकिरीटजुष्टं
   अप्युत्तमाङ्गं न नमेन् मुकुंदम् ।
शावौ करौ नो कुरुते सपर्यां
   हरेर्लसत्काञ्चनकङ्कणौ वा ॥ २१ ॥
बर्हायिते ते नयने नराणां
   लिङ्गानि विष्णोर्न निरीक्षतो ये ।
पादौ नृणां तौ द्रुमजन्मभाजौ
   क्षेत्राणि नानुव्रजतो हरेर्यौ ॥ २२ ॥
जीवन् शवो भागवताङ्घ्रिरेणुं
   न जातु मर्त्योऽभिलभेत यस्तु ।
श्रीविष्णुपद्या मनुजस्तुलस्याः
   श्वसन् शवो यस्तु न वेद गन्धम् ॥ २३ ॥
तदश्मसारं हृदयं बतेदं
   यद्गृह्यमाणैर्हरिनामधेयैः ।
न विक्रियेताथ यदा विकारो
   नेत्रे जलं गात्ररुहेषु हर्षः ॥ २४ ॥
अथाभिधेह्यङ्ग मनोऽनुकूलं
   प्रभाषसे भागवतप्रधानः ।
यदाह वैयासकिरात्मविद्या
   विशारदो नृपतिं साधु पृष्टः ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
द्वितीयस्कंधे तृतीयोऽध्यायः ॥ ३ ॥

सूत उवाच ।
वैयासकेरिति वचः तत्त्वनिश्चयमात्मनः ।
उपधार्य मतिं कृष्णे औत्तरेयः सतीं व्यधात् ॥ १ ॥
आत्मजायासुतागार पशुद्रविणबन्धुषु ।
राज्ये चाविकले नित्यं विरूढां ममतां जहौ ॥ २ ॥
पप्रच्छ चेममेवार्थं यन्मां पृच्छथ सत्तमाः ।
कृष्णानुभावश्रवणे श्रद्दधानो महामनाः ॥ ३ ॥
संस्थां विज्ञाय सन्न्यस्य कर्म त्रैवर्गिकं च यत् ।
वासुदेवे भगवति आत्मभावं दृढं गतः ॥ ४ ॥
राजोवाच ॥
समीचीनं वचो ब्रह्मन् सर्वज्ञस्य तवानघ ।
तमो विशीर्यते मह्यं हरेः कथयतः कथाम् ॥ ५ ॥
भूय एव विवित्सामि भगवान् आत्ममायया ।
यथेदं सृजते विश्वं दुर्विभाव्यमधीश्वरैः ॥ ६ ॥
यथा गोपायति विभुः यथा संयच्छते पुनः ।
यां यां शक्तिमुपाश्रित्य पुरुशक्तिः परः पुमान् ।
आत्मानं क्रीडयन्क्रीडन् करोति विकरोति च ॥ ७ ॥
नूनं भगवतो ब्रह्मन् हरेरद्भुतकर्मणः ।
दुर्विभाव्यमिवाभाति कविभिश्चापि चेष्टितम् ॥ ८ ॥
यथा गुणांस्तु प्रकृतेः युगपत् क्रमशोऽपि वा ।
बिभर्ति भूरिशस्त्वेकः कुर्वन् कर्माणि जन्मभिः ॥ ९ ॥
विचिकित्सितमेतन्मे ब्रवीतु भगवान् यथा ।
शाब्दे ब्रह्मणि निष्णातः परस्मिंश्च भवान्खलु ॥ १० ॥
सूत उवाच ।
इत्युपामंत्रितो राज्ञा गुणानुकथने हरेः ।
हृषीकेशं अनुस्मृत्य प्रतिवक्तुं प्रचक्रमे ॥ ११ ॥
श्रीशुक उवाच ।
नमः परस्मै पुरुषाय भूयसे
सदुद्भवस्थाननिरोधलीलया ।
गृहीतशक्तित्रितयाय देहिनां
अंतर्भवायानुपलक्ष्यवर्त्मने ॥ १२ ॥
भूयो नमः सद्वृजिनच्छिदेऽसतां
असंभवायाखिलसत्त्वमूर्तये ।

पौंस्नं वपुर्दर्शयानमनन्यसिद्धैः ।
औत्पत्तिकैः समगृणन्युतमष्टभोगैः ॥ ४५ ॥
कुमारा ऊचुः -
योऽन्तर्हितो हृदि गतोऽपि दुरात्मनां त्वं ।
सोऽद्यैव नो नयनमूलमनन्त राद्धः ।
यर्ह्येव कर्णविवरेण गुहां गतो नः ।
पित्रानुवर्णितरहा भवदुद्भवेन ॥ ४६ ॥
तं त्वां विदाम भगवन्परमात्मतत्त्वं ।
सत्त्वेन सम्प्रति रतिं रचयन्तमेषाम् ।
यत्तेऽनुतापविदितैर्दृढभक्तियोगैः ।
उद्ग्रन्थयो हृदि विदुर्मुनयो विरागाः ॥ ४७ ॥
नात्यन्तिकं विगणयन्त्यपि ते प्रसादं ।
किम्वन्यदर्पितभयं भ्रुव उन्नयैस्ते ।
येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः ।
कीर्तन्यतीर्थयशसः कुशला रसज्ञाः ॥ ४८ ॥
कामं भवः स्ववृजिनैर्निरयेषु नः स्तात् ।
चेतोऽलिवद्यदि नु ते पदयो रमेत ।
वाचश्च नस्तुलसिवद्यदि तेऽङ्घ्रिशोभाः ।
पूर्येत ते गुणगणैर्यदि कर्णरन्ध्रः ॥ ४९ ॥
प्रादुश्चकर्थ यदिदं पुरुहूत रूपं ।
तेनेश निर्वृतिमवापुरलं दृशो नः ।
तस्मा इदं भगवते नम इद्विधेम ।
योऽनात्मनां दुरुदयो भगवान् प्रतीतः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
तृतीयस्कन्धे जयविजयोः सनकादिशापो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

ब्रह्मोवाच -
इति तद्गृणतां तेषां मुनीनां योगधर्मिणाम् ।
प्रतिनन्द्य जगादेदं विकुण्ठनिलयो विभुः ॥ १ ॥
श्रीभगवानुवाच -
एतौ तौ पार्षदौ मह्यं जयो विजय एव च ।
कदर्थीकृत्य मां यद्वो बह्वक्रातामतिक्रमम् ॥ २ ॥
यस्त्वेतयोर्धृतो दण्डो भवद्भिर्मामनुव्रतैः ।
स एवानुमतोऽस्माभिः मुनयो देवहेलनात् ॥ ३ ॥
तद्वः प्रसादयाम्यद्य ब्रह्म दैवं परं हि मे ।
तद्धीत्यात्मकृतं मन्ये यत्स्वपुम्भिरसत्कृताः ॥ ४ ॥
यन्नामानि च गृह्णाति लोको भृत्ये कृतागसि ।
सोऽसाधुवादस्तत् कीर्तिं हन्ति त्वचमिवामयः ॥ ५ ॥
यस्यामृतामलयशःश्रवणावगाहः
    सद्यः पुनाति जगदाश्वपचाद्विकुण्ठः ।
सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्तिः
    छिन्द्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम् ॥ ६ ॥
यत्सेवया चरणपद्मपवित्ररेणुं
    सद्यः क्षताखिलमलं प्रतिलब्धशीलम् ।
न श्रीर्विरक्तमपि मां विजहाति यस्याः
    प्रेक्षालवार्थ इतरे नियमान् वहन्ति ॥ ७ ॥
नाहं तथाद्मि यजमानहविर्विताने
    च्योतद्घृतप्लुतमदन् हुतभुङ्मुखेन ।
यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासं
    तुष्टस्य मय्यवहितैर्निजकर्मपाकैः ॥ ८ ॥
येषां बिभर्म्यहमखण्डविकुण्ठयोग
    मायाविभूतिरमलाङ्घ्रिरजः किरीटैः ।
विप्रांस्तु को न विषहेत यदर्हणाम्भः
    सद्यः पुनाति सहचन्द्रललामलोकान् ॥ ९ ॥
ये मे तनूर्द्विजवरान्दुहतीर्मदीया
    भूतान्यलब्धशरणानि च भेदबुद्ध्या ।
द्रक्ष्यन्त्यघक्षतदृशो ह्यहिमन्यवस्तान्
    गृध्रा रुषा मम कुषन्त्यधिदण्डनेतुः ॥ १० ॥
ये ब्राह्मणान्मयि धिया क्षिपतोऽर्चयन्तः
    तुष्यद्धृदः स्मितसुधोक्षितपद्मवक्त्राः ।
वाण्यानुरागकलयात्मजवद् गृणन्तः
    सम्बोधयन्ति अहमिवाहमुपाहृतस्तैः ॥ ११ ॥
तन्मे स्वभर्तुरवसायमलक्षमाणौ
    युष्मद्व्यतिक्रमगतिं प्रतिपद्य सद्यः ।

भूयो ममान्तिकमितां तदनुग्रहो मे
    यत्कल्पतामचिरतो भृतयोर्विवासः ॥ १२ ॥
ब्रह्मोवाच -
अथ तस्योशतीं देवीं ऋषिकुल्यां सरस्वतीम् ।
नास्वाद्य मन्युदष्टानां तेषां आत्माप्यतृप्यत ॥ १३ ॥
सतीं व्यादाय शृण्वन्तो लघ्वीं गुर्वर्थगह्वराम् ।
विगाह्यागाधगम्भीरां न विदुस्तच्चिकीर्षितम् ॥ १४ ॥
ते योगमाययारब्ध पारमेष्ठ्यमहोदयम् ।
प्रोचुः प्राञ्जलयो विप्राः प्रहृष्टाः क्षुभितत्वचः ॥ १५ ॥
ऋषय ऊचुः -
न वयं भगवन् विद्मः तव देव चिकीर्षितम् ।
कृतो मेऽनुग्रहश्चेति यदध्यक्षः प्रभाषसे ॥ १६ ॥
ब्रह्मण्यस्य परं दैवं ब्राह्मणाः किल ते प्रभो ।
विप्राणां देवदेवानां भगवान् आत्मदैवतम् ॥ १७ ॥
त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव ।
धर्मस्य परमो गुह्यो निर्विकारो भवान्मतः ॥ १८ ॥
तरन्ति ह्यञ्जसा मृत्युं निवृत्ता यदनुग्रहात् ।
योगिनः स भवान् किंस्विद् अनुगृह्येत यत्परैः ॥ १९ ॥
यं वै विभूतिरुपयात्यनुवेलमन्यैः
    अर्थार्थिभिः स्वशिरसा धृतपादरेणुः ।
धन्यार्पिताङ्घ्रितुलसीनवदामधाम्नो
    लोकं मधुव्रतपतेरिव कामयाना ॥ २० ॥
यस्तां विविक्तचरितैः अनुवर्तमानां
    नात्याद्रियत्परमभागवतप्रसङ्गः ।
स त्वं द्विजानुपथपुण्यरजः पुनीतः
    श्रीवत्सलक्ष्म किमगा भगभाजनस्त्वम् ॥ २१ ॥
धर्मस्य ते भगवतस्त्रियुग त्रिभिः स्वैः
    पद्भिश्चराचरमिदं द्विजदेवतार्थम् ।
नूनं भृतं तदभिघाति रजस्तमश्च
    सत्त्वेन नो वरदया तनुवा निरस्य ॥ २२ ॥
न त्वं द्विजोत्तमकुलं यदि हात्मगोपं
    गोप्ता वृषः स्वर्हणेन ससूनृतेन ।
तर्ह्येव नङ्क्ष्यति शिवस्तव देव पन्था
    लोकोऽग्रहीष्यद् ऋषभस्य हि तत्प्रमाणम् ॥ २३ ॥
तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः
    क्षेमं जनाय निजशक्तिभिरुद्धृतारेः ।
नैतावता त्र्यधिपतेर्बत विश्वभर्तुः
    तेजः क्षतं त्ववनतस्य स ते विनोदः ॥ २४ ॥

यं वानयोर्दममधीश भवान्विधत्ते
    वृत्तिं नु वा तदनुमन्महि निर्व्यलीकम् ।
अस्मासु वा य उचितो ध्रियतां स दण्डो
    येऽनागसौ वयमयुङ्क्ष्महि किल्बिषेण ॥ २५ ॥
श्रीभगवानुवाच -
एतौ सुरेतरगतिं प्रतिपद्य सद्यः
    संरम्भसम्भृतसमाध्यनुबद्धयोगौ ।
भूयः सकाशमुपयास्यत आशु यो वः
    शापो मयैव निमितस्तदवेत विप्राः ॥ २६ ॥
ब्रह्मोवाच -
अथ ते मुनयो दृष्ट्वा नयनानन्दभाजनम् ।
वैकुण्ठं तदधिष्ठानं विकुण्ठं च स्वयंप्रभम् ॥ २७ ॥
भगवन्तं परिक्रम्य प्रणिपत्यानुमान्य च ।
प्रतिजग्मुः प्रमुदिताः शंसन्तो वैष्णवीं श्रियम् ॥ २८ ॥
भगवाननुगावाह यातं मा भैष्टमस्तु शम् ।
ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतं तु मे ॥ २९ ॥
एतत्पुरैव निर्दिष्टं रमया क्रुद्धया यदा ।
पुरापवारिता द्वारि विशन्ती मय्युपारते ॥ ३० ॥
मयि संरम्भयोगेन निस्तीर्य ब्रह्महेलनम् ।
प्रत्येष्यतं निकाशं मे कालेनाल्पीयसा पुनः ॥ ३१ ॥
द्वाःस्थावादिश्य भगवान् विमानश्रेणिभूषणम् ।
सर्वातिशयया लक्ष्म्या जुष्टं स्वं धिष्ण्यमाविशत् ॥ ३२ ॥
तौ तु गीर्वाणऋषभौ दुस्तरात् हरिलोकतः ।
हतश्रियौ ब्रह्मशापाद् अभूतां विगतस्मयौ ॥ ३३ ॥
तदा विकुण्ठधिषणात् तयोर्निपतमानयोः ।
हाहाकारो महानासीद् विमानाग्र्येषु पुत्रकाः ॥ ३४ ॥
तावेव ह्यधुना प्राप्तौ पार्षदप्रवरौ हरेः ।
दितेर्जठरनिर्विष्टं काश्यपं तेज उल्बणम् ॥ ३५ ॥
तयोरसुरयोरद्य तेजसा यमयोर्हि वः ।
आक्षिप्तं तेज एतर्हि भगवान् तद्विधित्सति ॥ ३६ ॥
विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो
    योगेश्वरैरपि दुरत्यययोगमायः ।
क्षेमं विधास्यति स नो भगवांस्त्र्यधीशः
    तत्रास्मदीयविमृशेन कियानिहार्थः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
तृतीयस्कन्धे षोडशोऽध्यायः ॥ १६ ॥

मैत्रेय उवाच -
निशम्यात्मभुवा गीतं कारणं शङ्कयोज्झिताः ।
ततः सर्वे न्यवर्तन्त त्रिदिवाय दिवौकसः ॥ १ ॥
दितिस्तु भर्तुरादेशाद् अपत्यपरिशङ्किनी ।
पूर्णे वर्षशते साध्वी पुत्रौ प्रसुषुवे यमौ ॥ २ ॥
उत्पाता बहवस्तत्र निपेतुर्जायमानयोः ।
दिवि भुव्यन्तरिक्षे च लोकस्य उरु भयावहाः ॥ ३ ॥
सहाचला भुवश्चेलुः दिशः सर्वाः प्रजज्वलुः ।
स उल्काश्च अशनयः पेतुः, केतवश्चार्तिहेतवः ॥ ४ ॥
ववौ वायुः सुदुःस्पर्शः फूत्कारानीरयन्मुहुः ।
उन्मूलयन् नगपतीन् वात्यानीको रजोध्वजः ॥ ५ ॥
उद्धसत् तडिदम्भोद घटया नष्टभागणे ।
व्योम्नि प्रविष्टतमसा न स्म व्यादृश्यते पदम् ॥ ६ ॥
चुक्रोश विमना वार्धिरुदूर्मिः क्षुभितोदरः ।
सोदपानाश्च सरितः चुक्षुभुः शुष्कपङ्कजाः ॥ ७ ॥
मुहुः परिधयोऽभूवन् सराहवोः शशिसूर्ययोः ।
निर्घाता रथनिर्ह्रादा विवरेभ्यः प्रजज्ञिरे ॥ ८ ॥
अन्तर्ग्रामेषु मुखतो वमन्त्यो वह्निमुल्बणम् ।
सृगाल उलूक टङ्कारैः प्रणेदुः अशिवं शिवाः ॥ ९ ॥
सङ्गीतवद् रोदनवद् उन्नमय्य शिरोधराम् ।
व्यमुञ्चन् विविधा वाचो ग्रामसिंहाः ततस्ततः ॥ १० ॥
खराश्च कर्कशैः क्षत्तः खुरैर्घ्नन्तो धरातलम् ।
खार्कार रभसा मत्ताः पर्यधावन् वरूथशः ॥ ११ ॥
रुदन्तो रासभत्रस्ता नीडाद् उदपतन्खगाः ।
घोषेऽरण्ये च पशवः शकृन् मूत्रमकुर्वत ॥ १२ ॥
गावः अत्रसन् असृग्दोहाः तोयदाः पूयवर्षिणः ।
व्यरुदन् देवलिङ्गानि द्रुमाः पेतुर्विनानिलम् ॥ १३ ॥
ग्रहान् पुण्यतमानन्ये भगणांश्चापि दीपिताः ।
अतिचेरुः वक्रगत्या युयुधुश्च परस्परम् ॥ १४ ॥
दृष्ट्वा अन्यांश्च महोत्पातान् अतत्-तत्त्वविदः प्रजाः ।
ब्रह्मपुत्रान् ऋते भीता मेनिरे विश्वसंप्लवम् ॥ १५ ॥
तौ आदिदैत्यौ सहसा व्यज्यमान आत्मपौरुषौ ।
ववृधातेऽश्मसारेण कायेन अद्रिपती इव ॥ १६ ॥
दिविस्पृशौ हेमकिरीटकोटिभिः
    निरुद्धकाष्ठौ स्फुरदङ्गदाभुजौ ।
गां कंपयन्तौ चरणैः पदे पदे
    कट्या सुकाञ्च्यार्कमतीत्य तस्थतुः ॥ १७ ॥
प्रजापतिर्नाम तयोरकार्षीद्

यः प्राक् स्वदेहाद्यमयोरजायत ।
तं वै हिरण्यकशिपुं विदुः प्रजा
यं तं हिरण्याक्षमसूत साग्रतः ॥ १८ ॥
चक्रे हिरण्यकशिपुः दोर्भ्यां ब्रह्मवरेण च ।
वशे सपालान् लोकान् त्रीन् अकुतोमृत्युरुद्धतः ॥ १९ ॥
हिरण्याक्षो अनुजस्तस्य प्रियः प्रीतिकृदन्वहम् ।
गदापाणिर्दिवं यातो युयुत्सुः मृगयन् रणम् ॥ २० ॥
तं वीक्ष्य दुःसहजवं रणत् काञ्चन नूपुरम् ।
वैजयन्त्या स्रजा जुष्टं अंस न्यस्त महागदम् ॥ २१ ॥
मनोवीर्यवर उत्सिक्तं असृण्यं अकुतोभयम् ।
भीता निलिल्यिरे देवाः तार्क्ष्य त्रस्तः इवाहयः ॥ २२ ॥
स वै तिरोहितान् दृष्ट्वा महसा स्वेन दैत्यराट् ।
स-इन्द्रान् देवगणान् क्षीबान् अपश्यन् व्यनदद्भृशम् ॥ २३ ॥
ततो निवृत्तः क्रीडिष्यन् गम्भीरं भीमनिस्वनम् ।
विजगाहे महासत्त्वो वार्धिं मत्त इव द्विपः ॥ २४ ॥
तस्मिन्प्रविष्टे वरुणस्य सैनिका
यादोगणाः सन्नधियः ससाध्वसाः ।
अहन्यमाना अपि तस्य वर्चसा
प्रधर्षिता दूरतरं प्रदुद्रुवुः ॥ २५ ॥
स वर्षपूगान् उदधौ महाबलः
चरन् महोर्मीन् श्वसनेरितान्मुहुः ।
मौर्व्याभिजघ्ने गदया विभावरीं
आसेदिवान् तास्तात पुरीं प्रचेतसः ॥ २६ ॥
तत्रोपलभ्यासुरलोकपालकं
यादोगणानां ऋषभं प्रचेतसम् ।
स्मयन् प्रलब्धुं प्रणिपत्य नीचवत्
जगाद मे देह्यधिराज संयुगम् ॥ २७ ॥
त्वं लोकपालोऽधिपतिर्बृहच्छ्रवा
वीर्यापहो दुर्मदवीरमानिनाम् ।
विजित्य लोकेऽखिलदैत्यदानवान्
यद् राजसूयेन पुरायजत्प्रभो ॥ २८ ॥
स एवं उत्सिक्त मदेन विद्विषा
दृढं प्रलब्धो भगवान् अपां पतिः ।
रोषं समुत्थं शमयन् स्वया धिया
व्यवोचदङ्गोपशमं गता वयम् ॥ २९ ॥
पश्यामि नान्यं पुरुषात् पुरातनाद्
यः संयुगे त्वां रणमार्गकोविदम् ।
आराधयिष्यति असुरर्षभेहि तं

मनस्विनो यं गृणते भवादृशाः ॥ ३० ॥
तं वीरमारादभिपद्य विस्मयः
शयिष्यसे वीरशये श्वभिर्वृतः ।
यस्त्वद्विधानां असतां प्रशान्तये
रूपाणि धत्ते सदनुग्रहेच्छया ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
तृतीयस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥

मैत्रेय उवाच ।
तदेवमाकर्ण्य जलेशभाषितं
    महामनास्तद् विगणय्य दुर्मदः ।
हरेर्विदित्वा गतिमङ्ग नारदाद्
    रसातलं निर्विविशे त्वरान्वितः ॥ १ ॥
ददर्श तत्राभिजितं धराधरं
    प्रोन्नीयमान अवनिं अग्रदंष्ट्रया ।
मुष्णन्तमक्ष्णा स्वरुचोऽरुणश्रिया
    जहास चाहो वनगोचरो मृगः ॥ २ ॥
आहैनमेह्यज्ञ महीं विमुञ्च नो
    रसौकसां विश्वसृजेयमर्पिता ।
न स्वस्ति यास्यस्यनया ममेक्षतः
    सुराधमासादितसूकराकृते ॥ ३ ॥
त्वं नः सपत्नैः अभवाय किं भृतो
    यो मायया हन्त्यसुरान् परोक्षजित् ।
त्वां योगमायाबलमल्पपौरुषं
    संस्थाप्य मूढ प्रमृजे सुहृच्छुचः ॥ ४ ॥
त्वयि संस्थिते गदया शीर्णशीर्षणि
    अस्मद्भुजच्युतया ये च तुभ्यम् ।
बलिं हरन्ति ऋषयो ये च देवाः
    स्वयं सर्वे न भविष्यन्त्यमूलाः ॥ ५ ॥
स तुद्यमानोऽरिदुरुक्ततोमरैः
    दंष्ट्राग्रगां गां उपलक्ष्य भीताम् ।
तोदं मृषन् निरगाद् अम्बुमध्याद्
    ग्राहाहतः सकरेणुर्यथेभः ॥ ६ ॥
तं निःसरन्तं सलिलाद् अनुद्रुतो
    हिरण्यकेशो द्विरदं यथा झषः ।
करालदंष्ट्रोऽशनिनिस्वनोऽब्रवीद्
    गतह्रियां किं त्वसतां विगर्हितम् ॥ ७ ॥
स गां उदस्तात् सलिलस्य गोचरे
    विन्यस्य तस्यां अदधात् स्वसत्त्वम् ।
अभिष्टुतो विश्वसृजा प्रसूनैः
    आपूर्यमाणो विबुधैः पश्यतोऽरेः ॥ ८ ॥
परानुषक्तं तपनीयोपकल्पं
    महागदं काञ्चनचित्रदंशम् ।
मर्माण्यभीक्ष्णं प्रतुदन्तं दुरुक्तैः
    प्रचण्डमन्युः प्रहसन् तं बभाषे ॥ ९ ॥
श्रीभगवानुवाच -

सत्यं वयं भो वनगोचरा मृगा
युष्मद्विधान्मृगये ग्रामसिंहान् ।
न मृत्युपाशैः प्रतिमुक्तस्य वीरा
विकत्थनं तव गृह्णन्त्यभद्र ॥ १० ॥
एते वयं न्यासहरा रसौकसां
गतह्रियो गदया द्रावितास्ते ।
तिष्ठामहेऽथापि कथञ्चिदाजौ
स्थेयं क्व यामो बलिनोत्पाद्य वैरम् ॥ ११ ॥
त्वं पद्-रथानां किल यूथपाधिपो
घटस्व नोऽस्वस्तय आश्वनूहः ।
संस्थाप्य चास्मान् प्रमृजाश्रु स्वकानां
यः स्वां प्रतिज्ञां नातिपिपर्त्यसभ्यः ॥ १२ ॥
मैत्रेय उवाच -
सोऽधिक्षिप्तो भगवता प्रलब्धश्च रुषा भृशम् ।
आजहारोल्बणं क्रोधं क्रीड्यमानोऽहिराडिव ॥ १३ ॥
सृजन् अमर्षितः श्वासान् मन्युप्रचलितेन्द्रियः ।
आसाद्य तरसा दैत्यो गदया न्यहनद् हरिम् ॥ १४ ॥
भगवान् तु गदावेगं विसृष्टं रिपुणोरसि ।
अवञ्चयत् तिरश्चीनो योगारूढ इवान्तकम् ॥ १५ ॥
पुनर्गदां स्वां आदाय भ्रामयन्तं अभीक्ष्णशः ।
अभ्यधावद् हरिः क्रुद्धः संरम्भाद् दष्टदच्छदम् ॥ १६ ॥
ततश्च गदयारातिं दक्षिणस्यां भ्रुवि प्रभुः ।
आजघ्ने स तु तां सौम्य गदया कोविदोऽहनत् ॥ १७ ॥
एवं गदाभ्यां गुर्वीभ्यां हर्यक्षो हरिरेव च ।
जिगीषया सुसंरब्धौ अन्योन्यं अभिजघ्नतुः ॥ १८ ॥
तयोः स्पृधोस्तिग्मगदाहताङ्गयोः
क्षतास्रवघ्राणविवृद्धमन्य्वोः ।
विचित्रमार्गांश्चरतोर्जिगीषया
व्यभादिलायामिव शुष्मिणोर्मृधः ॥ १९ ॥
दैत्यस्य यज्ञावयवस्य माया
गृहीतवाराहतनोर्महात्मनः ।
कौरव्य मह्यां द्विषतोर्विमर्दनं
दिदृक्षुरागाद् ऋषिभिर्वृतः स्वराट् ॥ २० ॥
आसन्नशौण्डीरमपेतसाध्वसं
कृतप्रतीकारमहार्यविक्रमम् ।
विलक्ष्य दैत्यं भगवान् सहस्रणीः
जगाद नारायणमादिसूकरम् ॥ २१ ॥
ब्रह्मोवाच -

एष ते देव देवानां अङ्घ्रिमूलमुपेयुषाम् ।
विप्राणां सौरभेयीणां भूतानां अपि अनागसाम् ॥ २२ ॥
आगस्कृद् भयकृद् दुष्कृद् अस्मद् राद्धवरोऽसुरः ।
अन्वेषन् अप्रतिरथो लोकान् अटति कण्टकः ॥ २३ ॥
मैनं मायाविनं दृप्तं निरङ्कुशमसत्तमम् ।
आक्रीड बालवद्देव यथाऽऽशीविषमुत्थितम् ॥ २४ ॥
न यावदेष वर्धेत स्वां वेलां प्राप्य दारुणः ।
स्वां देव मायां आस्थाय तावत् जह्यघमच्युत ॥ २५ ॥
एषा घोरतमा सन्ध्या लोकच्छम्बट्करी प्रभो ।
उपसर्पति सर्वात्मन् सुराणां जयमावह ॥ २६ ॥
अधुनैषोऽभिजिन्नाम योगो मौहूर्तिको ह्यगात् ।
शिवाय नस्त्वं सुहृदां आशु निस्तर दुस्तरम् ॥ २७ ॥
दिष्ट्या त्वां विहितं मृत्युं अयं आसादितः स्वयम् ।
विक्रम्यैनं मृधे हत्वा लोकान् आधेहि शर्मणि ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
तृतीयस्कन्धे अष्टादशोऽध्यायः ॥ १८ ॥

मैत्रेय उवाच -
अवधार्य विरिञ्चस्य निर्व्यलीकामृतं वचः ।
प्रहस्य प्रेमगर्भेण तदपाङ्गेन सोऽग्रहीत् ॥ १ ॥
ततः सपत्नं मुखतः चरन्तं अकुतोभयम् ।
जघानोत्पत्य गदया हनौ अवसुरमक्षजः ॥ २ ॥
सा हता तेन गदया विहता भगवत्करात् ।
विघूर्णित अपतद् रेजे तदद्‍भुतं इवाभवत् ॥ ३ ॥
स तदा लब्धतीर्थोऽपि न बबाधे निरायुधम् ।
मानयन् स मृधे धर्मं विष्वक्सेनं प्रकोपयन् ॥ ४ ॥
गदायां अपविद्धायां हाहाकारे विनिर्गते ।
मानयामास तद् धर्मं सुनाभं चास्मरद्‌विभुः ॥ ५ ॥
तं व्यग्रचक्रं दितिपुत्राधमेन
    स्वपार्षदमुख्येन विषज्जमानम् ।
चित्रा वाचोऽतद्‌विदां खेचराणां
    तत्रास्मासन् स्वस्ति तेऽमुं जहीति ॥ ६ ॥
स तं निशाम्यात्तरथाङ्गमग्रतो
    व्यवस्थितं पद्मपलाशलोचनम् ।
विलोक्य चामर्ष परिप्लुतेन्द्रियो
    रुषा स्वदन्तच्छदमादशच्छवसन् ॥ ७ ॥
(अनुष्टुप्)
करालदंष्ट्रश्चक्षुर्भ्यां सञ्चक्षाणो दहन्निव ।
अभिप्लुत्य स्वगदया हतोऽसीत्याहनद् हरिम् ॥ ८ ॥
पदा सव्येन तां साधो भगवान् यज्ञसूकरः ।
लीलया मिषतः शत्रोः प्राहरद् वातरंहसम् ॥ ९ ॥
आह चायुधमाधत्स्व घटस्व त्वं जिगीषसि ।
इत्युक्तः स तदा भूयः ताडयन् व्यनदद् भृशम् ॥ १० ॥
तां स आपततीं वीक्ष्य भगवान् समवस्थितः ।
जग्राह लीलया प्राप्तां गरुत्मानिव पन्नगीम् ॥ ११ ॥
स्वपौरुषे प्रतिहते हतमानो महासुरः ।
नैच्छद्‍गदां दीयमानां हरिणा विगतप्रभः ॥ १२ ॥
जग्राह त्रिशिखं शूलं ज्वलज्ज्वलनलोलुपम् ।
यज्ञाय धृतरूपाय विप्रायाभिचरन् यथा ॥ १३ ॥

तदोजसा दैत्यमहाभटार्पितं
    चकासदन्तःख उदीर्णदीधिति ।
चक्रेण चिच्छेद निशातनेमिना
    हरिर्यथा तार्क्ष्यपतत्रमुज्झितम् ॥ १४ ॥
वृक्णे स्वशूले बहुधारिणा हरेः

प्रत्येत्य विस्तीर्णमुरो विभूतिमत् ।
प्रवृद्धरोषः स कठोरमुष्टिना
नदन् प्रहृत्यान्तरधीयतासुरः ॥ १५ ॥
तेनेत्थमाहतः क्षत्तः भगवान् आदिसूकरः ।
नाकम्पत मनाक्क्वापि स्रजा हत इव द्विपः ॥ १६ ॥
अथोरुधासृजन् मायां योगमायेश्वरे हरौ ।
यां विलोक्य प्रजास्त्रस्ता मेनिरेऽस्योपसंयमम् ॥ १७ ॥
प्रववुर्वायवश्चण्डाः तमः पांसवमैरयन् ।
दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः प्रहिता इव ॥ १८ ॥
द्यौर्नष्टभगणाभ्रौघैः सविद्युत् स्तनयित्नुभिः ।
वर्षद्भिः पूयकेशासृग् विण्मूत्रास्थीनि चासकृत् ॥ १९ ॥
गिरयः प्रत्यदृश्यन्त नानायुधमुचोऽनघ ।
दिग्वाससो यातुधान्यः शूलिन्यो मुक्तमूर्धजाः ॥ २० ॥
बहुभिर्यक्षरक्षोभिः पत्त्यश्व रथकुञ्जरैः ।
आततायिभिरुत्सृष्टा हिंस्रा वाचोऽतिवैशसाः ॥ २१ ॥
प्रादुष्कृतानां मायानां आसुरीणां विनाशयत् ।
सुदर्शनास्त्रं भगवान् प्रायुङ्क्त दयितं त्रिपात् ॥ २२ ॥
तदा दितेः समभवत् सहसा हृदि वेपथुः ।
स्मरन्त्या भर्तुः आदेशं स्तनात् च असृक् प्रसुस्रुवे ॥ २३ ॥
विनष्टासु स्वमायासु भूयश्चाव्रज्य केशवम् ।
रुषोपगूहमानोऽमुं ददृशेऽवस्थितं बहिः ॥ २४ ॥
तं मुष्टिभिर्विनिघ्नन्तं वज्रसारैः अधोक्षजः ।
करेण कर्णमूलेऽहन् यथा त्वाष्ट्रं मरुत्पतिः ॥ २५ ॥
स आहतो विश्वजिता ह्यवज्ञया
परिभ्रमद्गात्र उदस्तलोचनः ।
विशीर्णबाह्वङ्घ्रिशिरोरुहोऽपतद्
यथा नगेन्द्रो लुलितो नभस्वता ॥ २६ ॥
क्षितौ शयानं तमकुण्ठवर्चसं
करालदंष्ट्रं परिदष्टदच्छदम् ।
अजादयो वीक्ष्य शशंसुरागता
अहो इमं को नु लभेत संस्थितिम् ॥ २७ ॥
यं योगिनो योगसमाधिना रहो
ध्यायन्ति लिङ्गादसतो मुमुक्षया ।
तस्यैष दैत्यऋषभः पदाहतो
मुखं प्रपश्यन् तनुमुत्ससर्ज ह ॥ २८ ॥
(अनुष्टुप्)
एतौ तौ पार्षदावस्य शापाद् यातौ असद्गतिम् ।
पुनः कतिपयैः स्थानं प्रपत्स्येते ह जन्मभिः ॥ २९ ॥

देवा ऊचुः -
नमो नमस्तेऽखिलयज्ञतन्तवे
    स्थितौ गृहीतामलसत्त्वमूर्तये ।
दिष्ट्या हतोऽयं जगतामरुन्तुदः
    त्वत् पादभक्त्या वयमीश निर्वृताः ॥ ३० ॥
मैत्रेय उवाच -
एवं हिरण्याक्षमसह्यविक्रमं
    स सादयित्वा हरिरादिसूकरः ।
जगाम लोकं स्वमखण्डितोत्सवं
    समीडितः पुष्करविष्टरादिभिः ॥ ३१ ॥
मया यथानूक्तमवादि ते हरेः
    कृतावतारस्य सुमित्र चेष्टितम् ।
यथा हिरण्याक्ष उदारविक्रमो
    महामृधे क्रीडनवन्निराकृतः ॥ ३२ ॥
सूत उवाच -
(अनुष्टुप्)
इति कौषारवाख्यातां आश्रुत्य भगवत्कथाम् ।
क्षत्तानन्दं परं लेभे महाभागवतो द्विज ॥ ३३ ॥
अन्येषां पुण्यश्लोकानां उद्दामयशसां सताम् ।
उपश्रुत्य भवेन्मोदः श्रीवत्साङ्कस्य किं पुनः ॥ ३४ ॥
यो गजेन्द्रं झषग्रस्तं ध्यायन्तं चरणाम्बुजम् ।
क्रोशन्तीनां करेणूनां कृच्छ्रतोऽमोचयद्द्रुतम् ॥ ३५ ॥
तं सुखाराध्यमृजुभिः अनन्यशरणैर्नृभिः ।
कृतज्ञः को न सेवेत दुराराध्यं असाधुभिः ॥ ३६ ॥
यो वै हिरण्याक्षवधं महाद्भुतं
    विक्रीडितं कारणसूकरात्मनः ।
श्रृणोति गायत्यनुमोदतेऽञ्जसा
    विमुच्यते ब्रह्मवधादपि द्विजाः ॥ ३७ ॥
एतन् महापुण्यमलं पवित्रं
    धन्यं यशस्यं पदमायुराशिषाम् ।
प्राणेन्द्रियाणां युधि शौर्यवर्धनं
    नारायणोऽन्ते गतिरङ्ग श्रृण्वताम् ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
तृतीयस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

शौनक उवाच -
महीं प्रतिष्ठामध्यस्य सौते स्वायम्भुवो मनुः ।
कानि अन्वतिष्ठद् द्वाराणि मार्गाय अवर जन्मनाम् ॥ १ ॥
क्षत्ता महाभागवतः कृष्णस्यैकान्तिकः सुहृत् ।
यस्तत्याजाग्रजं कृष्णे सापत्यं अघवानिति ॥ २ ॥
द्वैपायनादनवरो महित्वे तस्य देहजः ।
सर्वात्मना श्रितः कृष्णं तत्परांश्चाप्यनुव्रतः ॥ ३ ॥
किं अन्वपृच्छन् मैत्रेयं विरजास्तीर्थसेवया ।
उपगम्य कुशावर्त आसीनं तत्त्ववित्तमम् ॥ ४ ॥
तयोः संवदतोः सूत प्रवृत्ता ह्यमलाः कथाः ।
आपो गाङ्गा इवाघघ्नीः हरेः पादाम्बुजाश्रयाः ॥ ५ ॥
ता नः कीर्तय भद्रं ते कीर्तन्योदारकर्मणः ।
रसज्ञः को नु तृप्येत हरिलीलामृतं पिबन् ॥ ६ ॥
एवं उग्रश्रवाः पृष्ट ऋषिभिः नैमिषायनैः ।
भगवति अर्पिताध्यात्मः तान् आह श्रूयतामिति ॥ ७ ॥
सूत उवाच -
हरेर्धृतक्रोडतनोः स्वमायया
    निशम्य गोरुद्धरणं रसातलात् ।
लीलां हिरण्याक्षमवज्ञया हतं
    सञ्जातहर्षो मुनिमाह भारतः ॥ ८ ॥
विदुर उवाच -
प्रजापतिपतिः सृष्ट्वा प्रजासर्गे प्रजापतीन् ।
किं आरभत मे ब्रह्मन् प्रब्रूह्यव्यक्तमार्गवित् ॥ ९ ॥
ये मरीच्यादयो विप्रा यस्तु स्वायम्भुवो मनुः ।
ते वै ब्रह्मण आदेशात् कथं एतद् अभावयन् ॥ १० ॥
सद्वितीयाः किमसृजन् स्वतन्त्रा उत कर्मसु ।
आहो स्वित्संहताः सर्व इदं स्म समकल्पयन् ॥ ११ ॥
मैत्रेय उवाच -
दैवेन दुर्वितर्क्येण परेणानिमिषेण च ।
जातक्षोभाद् भगवतो महान् आसीद् गुणत्रयात् ॥ १२ ॥
रजःप्रधानान् महतः त्रिलिङ्गो दैवचोदितात् ।
जातः ससर्ज भूतादिः वियदादीनि पञ्चशः ॥ १३ ॥
तानि चैकैकशः स्रष्टुं असमर्थानि भौतिकम् ।
संहत्य दैवयोगेन हैमं अण्डं अवासृजन् ॥ १४ ॥
सोऽशयिष्टाब्धिसलिले आण्डकोशो निरात्मकः ।
साग्रं वै वर्षसाहस्रं अन्ववात्सीत् तं ईश्वरः ॥ १५ ॥
तस्य नाभेरभूत्पद्मं सहस्रार्कोरुदीधिति ।
सर्वजीवनिकायौको यत्र स्वयं अभूत्स्वराट् ॥ १६ ॥

सोऽनुविष्टो भगवता यः शेते सलिलाशये ।
लोकसंस्थां यथा पूर्वं निर्ममे संस्थया स्वया ॥ १७ ॥
ससर्ज च्छाययाविद्यां पञ्चपर्वाणमग्रतः ।
तामिस्रं अन्धतामिस्रं तमो मोहो महातमः ॥ १८ ॥
विससर्जात्मनः कायं नाभिनन्दन् तमोमयम् ।
जगृहुर्यक्षरक्षांसि रात्रिं क्षुत्तृट्समुद्भवाम् ॥ १९ ॥
क्षुत्तृड्भ्यां उपसृष्टास्ते तं जग्धुमभिदुद्रुवुः ।
मा रक्षतैनं जक्षध्वं इति ऊचुः क्षुत्तृडर्दिताः ॥ २० ॥
देवस्तानाह संविग्नो मा मां जक्षत रक्षत ।
अहो मे यक्षरक्षांसि प्रजा यूयं बभूविथ ॥ २१ ॥
देवताः प्रभया या या दीव्यन् प्रमुखतोऽसृजत् ।
ते अहार्षुर्देवयन्तो विसृष्टां तां प्रभामहः ॥ २२ ॥
देवोऽदेवाञ्जघनतः सृजति स्मातिलोलुपान् ।
ते एनं लोलुपतया मैथुनायाभिपेदिरे ॥ २३ ॥
ततो हसन् स भगवान् असुरैर्निरपत्रपैः ।
अन्वीयमानस्तरसा क्रुद्धो भीतः परापतत् ॥ २४ ॥
स उपव्रज्य वरदं प्रपन्नार्तिहरं हरिम् ।
अनुग्रहाय भक्तानां अनुरूपात्मदर्शनम् ॥ २५ ॥
पाहि मां परमात्मंस्ते प्रेषणेनासृजं प्रजाः ।
ता इमा यभितुं पापा उपाक्रामन्ति मां प्रभो ॥ २६ ॥
त्वमेकः किल लोकानां क्लिष्टानां क्लेशनाशनः ।
त्वमेकः क्लेशदस्तेषां अनासन्न पदां तव ॥ २७ ॥
सोऽवधार्यास्य कार्पण्यं विविक्ताध्यात्मदर्शनः ।
विमुञ्चात्मतनुं घोरां इत्युक्तो विमुमोच ह ॥ २८ ॥
तां क्वणच्चरणाम्भोजां मदविह्वल लोचनाम् ।
काञ्चीकलापविलसद् दुकूलत् छन्न रोधसम् ॥ २९ ॥
अन्योन्यश्लेषयोत्तुङ्ग निरन्तरपयोधराम् ।
सुनासां सुद्विजां स्निग्ध हासलीलावलोकनाम् ॥ ३० ॥
गूहन्तीं व्रीडयात्मानं नीलालकवरूथिनीम् ।
उपलभ्यासुरा धर्म सर्वे सम्मुमुहुः स्त्रियम् ॥ ३१ ॥
अहो रूपमहो धैर्यं अहो अस्या नवं वयः ।
मध्ये कामयमानानां अकामेव विसर्पति ॥ ३२ ॥
वितर्कयन्तो बहुधा तां सन्ध्यां प्रमदाकृतिम् ।
अभिसम्भाव्य विश्रम्भात् पर्यपृच्छन् कुमेधसः ॥ ३३ ॥
कासि कस्यासि रम्भोरु को वार्थस्तेऽत्र भामिनि ।
रूपद्रविणपण्येन दुर्भगान्नो विबाधसे ॥ ३४ ॥
या वा काचित्त्वमबले दिष्ट्या सन्दर्शनं तव ।
उत्सुनोषीक्षमाणानां कन्दुकक्रीडया मनः ॥ ३५ ॥

नैकत्र ते जयति शालिनि पादपद्मं
    घ्नन्त्या मुहुः करतलेन पतत्पतङ्गम् ।
मध्यं विषीदति बृहत्स्तनभारभीतं
    शान्तेव दृष्टिरमला सुशिखासमूहः ॥ ३६ ॥
इति सायन्तनीं सन्ध्यां असुराः प्रमदायतीम् ।
प्रलोभयन्तीं जगृहुः मत्वा मूढधियः स्त्रियम् ॥ ३७ ॥
प्रहस्य भावगम्भीरं जिघ्रन्ति आत्मानमात्मना ।
कान्त्या ससर्ज भगवान् गन्धर्वाप्सरसां गणान् ॥ ३८ ॥
विससर्ज तनुं तां वै ज्योत्स्नां कान्तिमतीं प्रियाम् ।
ते एव चाददुः प्रीत्या विश्वावसुपुरोगमाः ॥ ३९ ॥
सृष्ट्वा भूतपिशाचांश्च भगवान् आत्मतन्द्रिणा ।
दिग्वाससो मुक्तकेशान् वीक्ष्य चामीलयद् दृशौ ॥ ४० ॥
जगृहुस्तद्विसृष्टां तां जृम्भणाख्यां तनुं प्रभोः ।
निद्रां इन्द्रियविक्लेदो यया भूतेषु दृश्यते ।
येनोच्छिष्टान्धर्षयन्ति तमुन्मादं प्रचक्षते ॥ ४१ ॥
ऊर्जस्वन्तं मन्यमान आत्मानं भगवानजः ।
साध्यान् गणान् पितृगणान् परोक्षेणासृजत्प्रभुः ॥ ४२ ॥
ते आत्मसर्गं तं कायं पितरः प्रतिपेदिरे ।
साध्येभ्यश्च पितृभ्यश्च कवयो यद्वितन्वते ॥ ४३ ॥
सिद्धान् विद्याधरांश्चैव तिरोधानेन सोऽसृजत् ।
तेभ्योऽददात् तं आत्मानं अन्तर्धानाख्यमद्भुतम् ॥ ४४ ॥
स किन्नरान् किम्पुरुषान् प्रत्यात्म्येनासृजत्प्रभुः ।
मानयन् नात्मनात्मानं आत्माभासं विलोकयन् ॥ ४५ ॥
ते तु तज्जगृहू रूपं त्यक्तं यत्परमेष्ठिना ।
मिथुनीभूय गायन्तः तं एवोषसि कर्मभिः ॥ ४६ ॥
देहेन वै भोगवता शयानो बहुचिन्तया ।
सर्गेऽनुपचिते क्रोधात् उत्ससर्ज ह तद्वपुः ॥ ४७ ॥
येऽहीयन्तामुतः केशा अहयस्तेऽङ्ग जज्ञिरे ।
सर्पाः प्रसर्पतः क्रूरा नागा भोगोरुकन्धराः ॥ ४८ ॥
स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः ।
तदा मनून् ससर्जान्ते मनसा लोकभावनान् ॥ ४९ ॥
तेभ्यः सोऽसृजत्स्वीयं पुरं पुरुषमात्मवान् ।
तान् दृष्ट्वा ये पुरा सृष्टाः प्रशशंसुः प्रजापतिम् ॥ ५० ॥
अहो एतत् जगत्स्रष्टः सुकृतं बत ते कृतम् ।
प्रतिष्ठिताः क्रिया यस्मिन् साकं अन्नमदाम हे ॥ ५१ ॥
तपसा विद्यया युक्तो योगेन सुसमाधिना ।
ऋषीन् ऋषिः हृषीकेशः ससर्जाभिमताः प्रजाः ॥ ५२ ॥
तेभ्यश्चैकैकशः स्वस्य देहस्यांशमदादजः ।

यत्तत् समाधियोगर्द्धि तपोविद्याविरक्तिमत् ॥ ५३ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
तृतीयस्कन्धे विंशोऽध्यायः ॥ २० ॥

विदुर उवाच ।
स्वायम्भुवस्य च मनोः अंशः परमसम्मतः ।
कथ्यतां भगवन्यत्र मैथुनेनैधिरे प्रजाः ॥ १ ॥
प्रियव्रतोत्तानपादौ सुतौ स्वायम्भुवस्य वै ।
यथाधर्मं जुगुपतुः सप्तद्वीपवतीं महीम् ॥ २ ॥
तस्य वै दुहिता ब्रह्मन् देवहूतीति विश्रुता ।
पत्नी प्रजापतेरुक्ता कर्दमस्य त्वयानघ ॥ ३ ॥
तस्यां स वै महायोगी युक्तायां योगलक्षणैः ।
ससर्ज कतिधा वीर्यं तन्मे शुश्रूषवे वद ॥ ४ ॥
रुचिर्यो भगवान् ब्रह्मन् दक्षो वा ब्रह्मणः सुतः ।
यथा ससर्ज भूतानि लब्ध्वा भार्यां च मानवीम् ॥ ५ ॥
मैत्रेय उवाच -
प्रजाः सृजेति भगवान् कर्दमो ब्रह्मणोदितः ।
सरस्वत्यां तपस्तेपे सहस्राणां समा दश ॥ ६ ॥
ततः समाधियुक्तेन क्रियायोगेन कर्दमः ।
सम्प्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम् ॥ ७ ॥
तावत्प्रसन्नो भगवान् पुष्कराक्षः कृते युगे ।
दर्शयामास तं क्षत्तः शाब्दं ब्रह्म दधद्वपुः ॥ ८ ॥
स तं विरजमर्काभं सितपद्मोत्पलस्रजम् ।
स्निग्धनीलालकव्रात वक्त्राब्जं विरजोऽम्बरम् ॥ ९ ॥
किरीटिनं कुण्डलिनं शङ्खचक्रगदाधरम् ।
श्वेतोत्पलक्रीडनकं मनःस्पर्शस्मितेक्षणम् ॥ १० ॥
विन्यस्तचरणाम्भोजं अंसदेशे गरुत्मतः ।
दृष्ट्वा खेऽवस्थितं वक्षः श्रियं कौस्तुभकन्धरम् ॥ ११ ॥
जातहर्षोऽपतन्मूर्ध्ना क्षितौ लब्धमनोरथः ।
गीर्भिस्त्वभ्यगृणात्प्रीति स्वभावात्मा कृताञ्जलिः ॥ १२ ॥
ऋषिरुवाच -
जुष्टं बताद्याखिलसत्त्वराशेः
    सांसिध्यमक्ष्णोस्तव दर्शनान्नः ।
यद्दर्शनं जन्मभिरीड्य सद्भिः
    आशासते योगिनो रूढयोगाः ॥ १३ ॥
ये मायया ते हतमेधसस्त्वत्
    पादारविन्दं भवसिन्धुपोतम् ।
उपासते कामलवाय तेषां
    रासीश कामान् निरयेऽपि ये स्युः ॥ १४ ॥
तथा स चाहं परिवोढुकामः
    समानशीलां गृहमेधधेनुम् ।
उपेयिवान् मूलमशेषमूलं

दुराशयः कामदुघाङ्घ्रिपस्य ॥ १५ ॥
प्रजापतेस्ते वचसाधीश तन्त्या
लोकः किलायं कामहतोऽनुबद्धः ।
अहं च लोकानुगतो वहामि
बलिं च शुक्लानिमिषाय तुभ्यम् ॥ १६ ॥
लोकांश्च लोकानुगतान् पशूंश्च
हित्वा श्रितास्ते चरणातपत्रम् ।
परस्परं त्वद्गुणवादसीधु
पीयूषनिर्यापितदेहधर्माः ॥ १७ ॥
न तेऽजराक्षभ्रमिरायुरेषां
त्रयोदशारं त्रिशतं षष्टिपर्व ।
षण्नेम्यनन्तच्छदि यत्त्रिणाभि
करालस्रोतो जगदाच्छिद्य धावत् ॥ १८ ॥
एकः स्वयं सन्जगतः सिसृक्षया
अद्वितीययात्मन् अधि योगमायया ।
सृजस्यदः पासि पुनर्ग्रसिष्यसे
यथोर्णनाभिः भगवन् स्वशक्तिभिः ॥ १९ ॥
नैतद्बताधीश पदं तवेप्सितं
यन्मायया नस्तनुषे भूतसूक्ष्मम् ।
अनुग्रहायास्त्वपि यर्हि मायया
लसत्तुलस्या तनुवा विलक्षितः ॥ २० ॥
तं त्वानुभूत्योपरतक्रियार्थं
स्वमायया वर्तितलोकतन्त्रम् ।
नमाम्यभीक्ष्णं नमनीयपाद
सरोजमल्पीयसि कामवर्षम् ॥ २१ ॥
ऋषिरुवाच ।
इत्यव्यलीकं प्रणुतोऽब्जनाभः
तं आबभाषे वचसामृतेन ।
सुपर्णपक्षोपरि रोचमानः
प्रेमस्मित उद्वीक्षणविभ्रमद्भ्रूः ॥ २२ ॥
श्रीभगवानुवाच -
विदित्वा तव चैत्यं मे पुरैव समयोजि तत् ।
यदर्थं आत्मनियमैः त्वयैवाहं समर्चितः ॥ २३ ॥
न वै जातु मृषैव स्यात् प्रजाध्यक्ष मदर्हणम् ।
भवद्विधेष्वतितरां मयि सङ्गृभितात्मनाम् ॥ २४ ॥
प्रजापतिसुतः सम्राट् मनुर्विख्यातमङ्गलः ।
ब्रह्मावर्तं योऽधिवसन् शास्ति सप्तार्णवां महीम् ॥ २५ ॥
स चेह विप्र राजर्षिः महिष्या शतरूपया ।

आयास्यति दिदृक्षुस्त्वां परश्वो धर्मकोविदः ॥ २६ ॥
आत्मजां असितापाङ्गीं वयःशीलगुणान्विताम् ।
मृगयन्तीं पतिं दास्यति अनुरूपाय ते प्रभो ॥ २७ ॥
समाहितं ते हृदयं यत्र इमान् परिवत्सरान् ।
सा त्वां ब्रह्मन् नृपवधूः काममाशु भजिष्यति ॥ २८ ॥
या ते आत्मभृतं वीर्यं नवधा प्रसविष्यति ।
वीर्ये त्वदीये ऋषय आधास्यन्ति अञ्जसात्मनः ॥ २९ ॥
त्वं च सम्यग् अनुष्ठाय निदेशं मे उशत्तमः ।
मयि तीर्थीकृताशेष क्रियार्थो मां प्रपत्स्यसे ॥ ३० ॥
कृत्वा दयां च जीवेषु दत्त्वा चाभयमात्मवान् ।
मय्यात्मानं सह जगद् द्रक्ष्यस्यात्मनि चापि माम् ॥ ३१ ॥
सहाहं स्वांशकलया त्वद्वीर्येण महामुने ।
तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम् ॥ ३२ ॥
मैत्रेय उवाच -
एवं तं अनुभाष्याथ भगवान् प्रत्यगक्षजः ।
जगाम बिन्दुसरसः सरस्वत्या परिश्रितात् ॥ ३३ ॥
निरीक्षतस्तस्य ययावशेष
सिद्धेश्वराभिष्टुतसिद्धमार्गः ।
आकर्णयन् पत्त्ररथेन्द्रपक्षैः
उच्चारितं स्तोममुदीर्णसाम ॥ ३४ ॥
अथ सम्प्रस्थिते शुक्ले कर्दमो भगवान् ऋषिः ।
आस्ते स्म बिन्दुसरसि तं कालं प्रतिपालयन् ॥ ३५ ॥
मनुः स्यन्दनमास्थाय शातकौम्भपरिच्छदम् ।
आरोप्य स्वां दुहितरं सभार्यः पर्यटन् महीम् ॥ ३६ ॥
तस्मिन् सुधन्वन्नहनि भगवान् यत्समादिशत् ।
उपायादाश्रमपदं मुनेः शान्तव्रतस्य तत् ॥ ३७ ॥
यस्मिन्भगवतो नेत्रान् न्यपतन् अश्रुबिन्दवः ।
कृपया सम्परीतस्य प्रपन्नेऽर्पितया भृशम् ॥ ३८ ॥
तद्वै बिन्दुसरो नाम सरस्वत्या परिप्लुतम् ।
पुण्यं शिवामृतजलं महर्षिगणसेवितम् ॥ ३९ ॥
पुण्यद्रुमलताजालैः कूजत् पुण्यमृगद्विजैः ।
सर्वर्तुफलपुष्पाढ्यं वनराजिश्रियान्वितम् ॥ ४० ॥
मत्त-द्विजगणैर्घुष्टं मत्तभ्रमर विभ्रमम् ।
मत्त-बर्हिनटाटोपं आह्वयन् मत्तकोकिलम् ॥ ४१ ॥
कदम्ब चम्पकाशोक करञ्ज बकुलासनैः ।
कुन्दमन्दारकुटजैः चूतपोतैः अलङ्कृतम् ॥ ४२ ॥
कारण्डवैः प्लवैर्हंसैः कुररैः जलकुक्कुटैः ।
सारसैः चक्रवाकैश्च चकोरैः वल्गु कूजितम् ॥ ४३ ॥

तथैव हरिणैः क्रोडैः श्वावित् गवय कुञ्जरैः ।
गोपुच्छैः हरिभिः मर्कैः नकुलैः नाभिभिर्वृतम् ॥ ४४ ॥
प्रविश्य तत्तीर्थवरं आदिराजः सहात्मजः ।
ददर्श मुनिमासीनं तस्मिन् हुतहुताशनम् ॥ ४५ ॥
विद्योतमानं वपुषा तपसि उग्रयुजा चिरम् ।
नातिक्षामं भगवतः स्निग्धापाङ्गावलोकनात् ।
तद्व्याहृतामृतकला पीयूषश्रवणेन च ॥ ४६ ॥
प्रांशुं पद्मपलाशाक्षं जटिलं चीरवाससम् ।
उपसंश्रित्य मलिनं यथार्हणं असंस्कृतम् ॥ ४७ ॥
अथोटजमुपायातं नृदेवं प्रणतं पुरः ।
सपर्यया पर्यगृह्णात् प्रतिनन्द्यानुरूपया ॥ ४८ ॥
गृहीतार्हणमासीनं संयतं प्रीणयन् मुनिः ।
स्मरन् भगवदादेशं इत्याह श्लक्ष्णया गिरा ॥ ४९ ॥
नूनं चङ्क्रमणं देव सतां संरक्षणाय ते ।
वधाय चासतां यस्त्वं हरेः शक्तिर्हि पालिनी ॥ ५० ॥
योऽर्केन्दु अग्नीन्द्रवायूनां यमधर्मप्रचेतसाम् ।
रूपाणि स्थान आधत्से तस्मै शुक्लाय ते नमः ॥ ५१ ॥
न यदा रथमास्थाय जैत्रं मणिगणार्पितम् ।
विस्फूर्जत् चण्डकोदण्डो रथेन त्रासयन् अघान् ॥ ५२ ॥
स्वसैन्यचरणक्षुण्णं वेपयन् मण्डलं भुवः ।
विकर्षन् बृहतीं सेनां पर्यटसि अंशुमानिव ॥ ५३ ॥
तदैव सेतवः सर्वे वर्णाश्रमनिबन्धनाः ।
भगवद् रचिता राजन् भिद्येरन् बत दस्युभिः ॥ ५४ ॥
अधर्मश्च समेधेत लोलुपैर्व्यङ्कुशैर्नृभिः ।
शयाने त्वयि लोकोऽयं दस्युग्रस्तो विनङ्क्ष्यति ॥ ५५ ॥
अथापि पृच्छे त्वां वीर यदर्थं त्वं इहागतः ।
तद्वयं निर्व्यलीकेन प्रतिपद्यामहे हृदा ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
तृतीयस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥

मैत्रेय उवाच -
एवं आविष्कृताशेष गुणकर्मोदयो मुनिम् ।
सव्रीड इव तं सम्राड् उपारतमुवाच ह ॥ १ ॥
मनुरुवाच -
ब्रह्मासृजत्स्वमुखतो युष्मान् आत्मपरीप्सया ।
छन्दोमयस्तपोविद्या योगयुक्तानलम्पटान् ॥ २ ॥
तत्त्राणायासृजत् चास्मान् दोः सहस्रात्सहस्रपात् ।
हृदयं तस्य हि ब्रह्म क्षत्रमङ्गं प्रचक्षते ॥ ३ ॥
अतो ह्यन्योन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः ।
रक्षति स्माव्ययो देवः स यः सदसदात्मकः ॥ ४ ॥
तव सन्दर्शनादेव च्छिन्ना मे सर्वसंशयाः ।
यत्स्वयं भगवान् प्रीत्या धर्ममाह रिरक्षिषोः ॥ ५ ॥
दिष्ट्या मे भगवान् दृष्टो दुर्दर्शो योऽकृतात्मनाम् ।
दिष्ट्या पादरजः स्पृष्टं शीर्ष्णा मे भवतः शिवम् ॥ ६ ॥
दिष्ट्या त्वयानुशिष्टोऽहं कृतश्चानुग्रहो महान् ।
अपावृतैः कर्णरन्ध्रैः जुष्टा दिष्ट्योशतीर्गिरः ॥ ७ ॥
स भवान् दुहितृस्नेह परिक्लिष्टात्मनो मम ।
श्रोतुमर्हसि दीनस्य श्रावितं कृपया मुने ॥ ८ ॥
प्रियव्रतोत्तानपदोः स्वसेयं दुहिता मम ।
अन्विच्छति पतिं युक्तं वयःशीलगुणादिभिः ॥ ९ ॥
यदा तु भवतः शील श्रुतरूपवयोगुणान् ।
अशृणोत् नारदाद् एषा त्वय्यासीत् कृतनिश्चया ॥ १० ॥
तत्प्रतीच्छ द्विजाग्र्येमां श्रद्धयोपहृतां मया ।
सर्वात्मनानुरूपां ते गृहमेधिषु कर्मसु ॥ ११ ॥
उद्यतस्य हि कामस्य प्रतिवादो न शस्यते ।
अपि निर्मुक्तसङ्गस्य कामरक्तस्य किं पुनः ॥ १२ ॥
य उद्यतमनादृत्य कीनाशं अभियाचते ।
क्षीयते तद्यशः स्फीतं मानश्चावज्ञया हतः ॥ १३ ॥
अहं त्वाश्रृणवं विद्वन् विवाहार्थं समुद्यतम् ।
अतस्त्वं उपकुर्वाणः प्रत्तां प्रतिगृहाण मे ॥ १४ ॥
ऋषिरुवाच ।
बाढमुद्वोढुकामोऽहं अप्रत्ता च तवात्मजा ।
आवयोः अनुरूपोऽसौ आद्यो वैवाहिको विधिः ॥ १५ ॥
कामः स भूयान् नरदेव तेऽस्याः
  पुत्र्याः समाम्नायविधौ प्रतीतः ।
क एव ते तनयां नाद्रियेत
  स्वयैव कान्त्या क्षिपतीमिव श्रियम् ॥ १६ ॥
यां हर्म्यपृष्ठे क्वणदङ्घ्रिशोभां

विक्रीडतीं कन्दुकविह्वलाक्षीम् ।
विश्वावसुर्न्यपतत् स्वात् विमानात्
विलोक्य सम्मोहविमूढचेताः ॥ १७ ॥
तां प्रार्थयन्तीं ललनाललामं
असेवितश्रीचरणैरदृष्टाम् ।
वत्सां मनोरुच्चपदः स्वसारं
को नानुमन्येत बुधोऽभियाताम् ॥ १८ ॥
अतो भजिष्ये समयेन साध्वीं
यावत्तेजो बिभृयाद् आत्मनो मे ।
अतो धर्मान् पारमहंस्यमुख्यान्
शुक्लप्रोक्तान् बहु मन्येऽविहिंस्रान् ॥ १९ ॥
यतोऽभवद्विश्वमिदं विचित्रं
संस्थास्यते यत्र च वावतिष्ठते ।
प्रजापतीनां पतिरेष मह्यं
परं प्रमाणं भगवान् अनन्तः ॥ २० ॥
मैत्रेय उवाच -
स उग्रधन्वन् नियदेवाबभाषे
आसीच्च तूष्णीं अरविन्दनाभम् ।
धियोपगृह्णन् स्मितशोभितेन
मुखेन चेतो लुलुभे देवहूत्याः ॥ २१ ॥
(अनुष्टुप्)
सोऽनु ज्ञात्वा व्यवसितं महिष्या दुहितुः स्फुटम् ।
तस्मै गुणगणाढ्याय ददौ तुल्यां प्रहर्षितः ॥ २२ ॥
शतरूपा महाराज्ञी पारिबर्हान् महाधनान् ।
दम्पत्योः पर्यदात् प्रीत्या भूषावासः परिच्छदान् ॥ २३ ॥
प्रत्तां दुहितरं सम्राट् सदृक्षाय गतव्यथः ।
उपगुह्य च बाहुभ्यां औत्कण्ठ्योन्मथिताशयः ॥ २४ ॥
अशक्नुवन् तद्विरहं मुञ्चन् बाष्पकलां मुहुः ।
आसिञ्चद् अम्ब वत्सेति नेत्रोदैर्दुहितुः शिखाः ॥ २५ ॥
आमन्त्र्य तं मुनिवं अमनुज्ञातः सहानुगः ।
प्रतस्थे रथमारुह्य सभार्यः स्वपुरं नृपः ॥ २६ ॥
उभयोः ऋषिकुल्यायाः सरस्वत्याः सुरोधसोः ।
ऋषीणां उपशान्तानां पश्यन् आश्रमसम्पदः ॥ २७ ॥
तं आयान्तं अभिप्रेत्य ब्रह्मावर्तात्प्रजाः पतिम् ।
गीतसंस्तुतिवादित्रैः प्रत्युदीयुः प्रहर्षिताः ॥ २८ ॥
बर्हिष्मती नाम पुरी सर्वसंपत् समन्विता ।
न्यपतन्यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः ॥ २९ ॥
कुशाः काशास्त एवासन् शश्वद्धरितवर्चसः ।

ऋषयो यैः पराभाव्य यज्ञघ्नान् यज्ञमीजिरे ॥ ३० ॥
कुशकाशमयं बर्हिः आस्तीर्य भगवान् मनुः ।
अयजद् यज्ञपुरुषं लब्धा स्थानं यतो भुवम् ॥ ३१ ॥
बर्हिष्मतीं नाम विभुः यां निर्विश्य समावसत् ।
तस्यां प्रविष्टो भवनं तापत्रयविनाशनम् ॥ ३२ ॥
सभार्यः सप्रजः कामान् बुभुजेऽन्याविरोधतः ।
सङ्गीयमानसत्कीर्तिः सस्त्रीभिः सुरगायकैः ।
प्रत्यूषेष्वनुबद्धेन हृदा श्रृण्वन् हरेः कथाः ॥ ३३ ॥
निष्णातं योगमायासु मुनिं स्वायम्भुवं मनुम् ।
यदाभ्रंशयितुं भोगा न शेकुर्भगवत्परम् ॥ ३४ ॥
अयातयामाः तस्यासन् यामाः स्वान्तरयापनाः ।
श्रृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ॥ ३५ ॥
स एवं स्वान्तरं निन्ये युगानां एकसप्ततिम् ।
वासुदेवप्रसङ्गेन परिभूतगतित्रयः ॥ ३६ ॥
शारीरा मानसा दिव्या वैयासे ये च मानुषाः ।
भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयम् ॥ ३७ ॥
यः पृष्टो मुनिभिः प्राह धर्मान् नानाविधान् शुभान् ।
नृणां वर्णाश्रमाणां च सर्वभूतहितः सदा ॥ ३८ ॥
एतत्ते आदिराजस्य मनोश्चरितमद्भुतम् ।
वर्णितं वर्णनीयस्य तदपत्योदयं श्रृणु ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
तृतीयस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥

मैत्रेय उवाच ।
पितृभ्यां प्रस्थिते साध्वी पतिं इङ्कितकोविदा ।
नित्यं पर्यचरत् प्रीत्या भवानीव भवं प्रभुम् ॥ १ ॥
विश्रम्भेणात्मशौचेन गौरवेण दमेन च ।
शुश्रूषया सौहृदेन वाचा मधुरया च भोः ॥ २ ॥
विसृज्य कामं दम्भं च द्वेषं लोभमघं मदम् ।
अप्रमत्तोद्यता नित्यं तेजीयांसमतोषयत् ॥ ३ ॥
स वै देवर्षिवर्यस्तां मानवीं समनुव्रताम् ।
दैवाद्गरीयसः पत्युः आशासानां महाशिषः ॥ ४ ॥
कालेन भूयसा क्षामां कर्शितां व्रतचर्यया ।
प्रेमगद्गदया वाचा पीडितः कृपयाब्रवीत् ॥ ५ ॥
कर्दम उवाच -
तुष्टोऽहमद्य तव मानवि मानदायाः
 शुश्रूषया परमया परया च भक्त्या ।
यो देहिनामयमतीव सुहृत्स देहो
 नावेक्षितः समुचितः क्षपितुं मदर्थे ॥ ६ ॥
ये मे स्वधर्मनिरतस्य तपःसमाधि
 विद्यात्मयोगविजिता भगवत्प्रसादाः ।
तानेव ते मदनुसेवनयावरुद्धान्
 दृष्टिं प्रपश्य वितराम्यभयानशोकान् ॥ ७ ॥
अन्ये पुनर्भगवतो भ्रुव उद्विजृम्भ
 विभ्रंशितार्थरचनाः किमुरुक्रमस्य ।
सिद्धासि भुङ्क्ष्व विभवान् निजधर्मदोहान्
 दिव्यान् नरैर्दुरधिगान् नृपविक्रियाभिः ॥ ८ ॥
एवं ब्रुवाणमबलाखिलयोगमाया
 विद्याविचक्षणमवेक्ष्य गताधिरासीत् ।
सम्प्रश्रयप्रणयविह्वलया गिरेषद्
 व्रीडावलोकविलसद् हसिताननाह ॥ ९ ॥
देवहूतिरुवाच -
राद्धं बत द्विजवृषैतदमोघयोग
 मायाधिपे त्वयि विभो तदवैमि भर्तः ।
यस्तेऽभ्यधायि समयः सकृदङ्गसङ्गो
 भूयाद्गरीयसि गुणः प्रसवः सतीनाम् ॥ १० ॥
तत्रेतिकृत्यमुपशिक्ष यथोपदेशं
 येनैष मे कर्शितोऽतिरिरंसयाऽऽत्मा ।
सिद्ध्येत ते कृतमनोभवधर्षिताया
 दीनस्तदीश भवनं सदृशं विचक्ष्व ॥ ११ ॥
मैत्रेय उवाच -

प्रियायाः प्रियमन्विच्छन् कर्दमो योगमास्थितः ।
विमानं कामगं क्षत्तः तर्ह्येवाविरचीकरत् ॥ १२ ॥
सर्वकामदुघं दिव्यं सर्वरत्नसमन्वितम् ।
सर्वर्द्ध्युपचयोदर्कं मणिस्तम्भैरुपस्कृतम् ॥ १३ ॥
दिव्योपकरणोपेतं सर्वकालसुखावहम् ।
पट्टिकाभिः पताकाभिः विचित्राभिः अलङ्कृतम् ॥ १४ ॥
स्रग्भिर्विचित्रमाल्याभिः मञ्जुशिञ्जत् षडङ्घ्रिभिः ।
दुकूलक्षौमकौशेयैः नानावस्त्रैः विराजितम् ॥ १५ ॥
उपर्युपरि विन्यस्त निलयेषु पृथक्पृथक् ।
क्षिप्तैः कशिपुभिः कान्तं पर्यङ्कव्यजनासनैः ॥ १६ ॥
तत्र तत्र विनिक्षिप्त नानाशिल्पोपशोभितम् ।
महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः ॥ १७ ॥
द्वाःसु विद्रुमदेहल्या भातं वज्रकपाटवत् ।
शिखरेषु इन्द्रनीलेषु हेमकुम्भैः अधिश्रितम् ॥ १८ ॥
चक्षुष्मत् पद्मरागाग्र्यैः वज्रभित्तिषु निर्मितैः ।
जुष्टं विचित्रवैतानैः महार्हैः हेमतोरणैः ॥ १९ ॥
हंसपारावतव्रातैः तत्र तत्र निकूजितम् ।
कृत्रिमान् मन्यमानैः स्वान् अधिरुह्याधिरुह्य च ॥ २० ॥
विहारस्थानविश्राम संवेशप्राङ्गणाजिरैः ।
यथोपजोषं रचितैः व्प्स्मापनं इवात्मनः ॥ २१ ॥
ईदृग्गृहं तत्पश्यन्तीं नातिप्रीतेन चेतसा ।
सर्वभूताशयाभिज्ञः प्रावोचत् कर्दमः स्वयम् ॥ २२ ॥
निमज्ज्यास्मिन् ह्रदे भीरु विमानं इदमारुह ।
इदं शुक्लकृतं तीर्थं आशिषां यापकं नृणाम् ॥ २३ ॥
सा तद्भर्तुः समादाय वचः कुवलयेक्षणा ।
सरजं बिभ्रती वासो वेणीभूतांश्च मूर्धजान् ॥ २४ ॥
अङ्गं च मलपङ्केन सञ्छन्नं शबलस्तनम् ।
आविवेश सरस्वत्याः सरः शिवजलाशयम् ॥ २५ ॥
सान्तः सरसि वेश्मस्थाः शतानि दश कन्यकाः ।
सर्वाः किशोरवयसो ददर्शोत्पलगन्धयः ॥ २६ ॥
तां दृष्ट्वा सहसोत्थाय प्रोचुः प्राञ्जलयः स्त्रियः ।
वयं कर्मकरीस्तुभ्यं शाधि नः करवाम किम् ॥ २७ ॥
स्नानेन तां महार्हेण स्नापयित्वा मनस्विनीम् ।
दुकूले निर्मले नूत्ने ददुरस्यै च मानदाः ॥ २८ ॥
भूषणानि परार्ध्यानि वरीयांसि द्युमन्ति च ।
अन्नं सर्वगुणोपेतं पानं चैवामृतासवम् ॥ २९ ॥
अथादर्शे स्वमात्मानं स्रग्विणं विरजाम्बरम् ।
विरजं कृतस्वस्त्ययनं कन्याभिर्बहुमानितम् ॥ ३० ॥

स्नातं कृतशिरःस्नानं सर्वाभरणभूषितम् ।
निष्कग्रीवं वलयिनं कूजत् काञ्चननूपुरम् ॥ ३१ ॥
श्रोण्योरध्यस्तया काञ्च्या काञ्चन्या बहुरत्नया ।
हारेण च महार्हेण रुचकेन च भूषितम् ॥ ३२ ॥
सुदता सुभ्रुवा श्लक्ष्ण स्निग्धापाङ्गेन चक्षुषा ।
पद्मकोशस्पृधा नीलैः अलकैश्च लसन्मुखम् ॥ ३३ ॥
यदा सस्मार ऋषभं ऋषीणां दयितं पतिम् ।
तत्र चास्ते सह स्त्रीभिः यत्रास्ते स प्रजापतिः ॥ ३४ ॥
भर्तुः पुरस्तादात्मानं स्त्रीसहस्रवृतं तदा ।
निशाम्य तद्योगगतिं संशयं प्रत्यपद्यत ॥ ३५ ॥
स तां कृतमलस्नानां विभ्राजन्तीमपूर्ववत् ।
आत्मनो बिभ्रतीं रूपं संवीतरुचिरस्तनीम् ॥ ३६ ॥
विद्याधरीसहस्रेण सेव्यमानां सुवाससम् ।
जातभावो विमानं तद् आरोहयद् अमित्रहन् ॥ ३७ ॥
तस्मिन् अलुप्तमहिमा प्रिययानुरक्तो
    विद्याधरीभिरुपचीर्णवपुर्विमाने ।
बभ्राज उत्कचकुमुद्गणवानपीच्यः
    ताराभिरावृत इव उडुपतिः नभःस्थः ॥ ३८ ॥
तेनाष्टलोकपविहारकुलाचलेन्द्र
    द्रोणीष्वनङ्गसखमारुतसौभगासु ।
सिद्धैर्नुतो द्युधुनिपातशिवस्वनासु
    रेमे चिरं धनदवल्ललनावरूथी ॥ ३९ ॥
वैश्रम्भके सुरसने नन्दने पुष्पभद्रके ।
मानसे चैत्ररथ्ये च स रेमे रामया रतः ॥ ४० ॥
भ्राजिष्णुना विमानेन कामगेन महीयसा ।
वैमानिकानत्यशेत चरन् लोकान यथानिलः ॥ ४१ ॥
किं दुरापादनं तेषां पुंसां उद्दामचेतसाम् ।
यैराश्रितस्तीर्थपदः चरणो व्यसनात्ययः ॥ ४२ ॥
प्रेक्षयित्वा भुवो गोलं पत्न्यै यावान् स्वसंस्थया ।
बह्वाश्चर्यं महायोगी स्वाश्रमाय न्यवर्तत ॥ ४३ ॥
विभज्य नवधाऽऽत्मानं मानवीं सुरतोत्सुकाम् ।
रामां निरमयन् रेमे वर्षपूगान् मुहूर्तवत् ॥ ४४ ॥
तस्मिन् विमान उत्कृष्टां शय्यां रतिकरीं श्रिता ।
न चाबुध्यत तं कालं पत्यापीच्येन सङ्गता ॥ ४५ ॥
एवं योगानुभावेन दम्पत्यो रममाणयोः ।
शतं व्यतीयुः शरदः कामलालसयोर्मनाक् ॥ ४६ ॥
तस्यां आधत्त रेतस्तां भावयन् आत्मनाऽऽत्मवित् ।
नोधा विधाय रूपं स्वं सर्वसङ्कल्पविद्विभुः ॥ ४७ ॥

अतः सा सुषुवे सद्यो देवहूतिः स्त्रियः प्रजाः ।
सर्वास्ताश्चारुसर्वाङ्ग्यो लोहितोत्पलगन्धयः ॥ ४८ ॥
पतिं सा प्रव्रजिष्यन्तं तदाऽऽलक्ष्योशती बहिः ।
स्मयमाना विक्लवेन हृदयेन विदूयता ॥ ४९ ॥
लिखन्त्यधोमुखी भूमिं पदा नखमणिश्रिया ।
उवाच ललितां वाचं निरुध्याश्रुकलां शनैः ॥ ५० ॥
देवहूतिरुवाच -
सर्वं तद्भगवान् मह्यं उपोवाह प्रतिश्रुतम् ।
अथापि मे प्रपन्नाया अभयं दातुमर्हसि ॥ ५१ ॥
ब्रह्मन् दुहितृभिस्तुभ्यं विमृग्याः पतयः समाः ।
कश्चित्स्यान्मे विशोकाय त्वयि प्रव्रजिते वनम् ॥ ५२ ॥
एतावतालं कालेन व्यतिक्रान्तेन मे प्रभो ।
इन्द्रियार्थप्रसङ्गेन परित्यक्तपरात्मनः ॥ ५३ ॥
इन्द्रियार्थेषु सज्जन्त्या प्रसङ्गस्त्वयि मे कृतः ।
अजानन्त्या परं भावं तथाप्यस्तु अभयाय मे ॥ ५४ ॥
सङ्गो यः संसृतेर्हेतुः असत्सु विहितोऽधिया ।
स एव साधुषु कृतो निःसङ्गत्वाय कल्पते ॥ ५५ ॥
नेह यत्कर्म धर्माय न विरागाय कल्पते ।
न तीर्थपदसेवायै जीवन्नपि मृतो हि सः ॥ ५६ ॥
साहं भगवतो नूनं वञ्चिता मायया दृढम् ।
यत्त्वां विमुक्तिदं प्राप्य न मुमुक्षेय बन्धनात् ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
तृतीयस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

मैत्रेय उवाच -
निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः ।
दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन् ॥ १ ॥
ऋषिरुवाच -
मा खिदो राजपुत्रीत्थं आत्मानं प्रत्यनिन्दिते ।
भगवान् तेऽक्षरो गर्भं अदूरात्सम्प्रपत्स्यते ॥ २ ॥
धृतव्रतासि भद्रं ते दमेन नियमेन च ।
तपोद्रविणदानैश्च श्रद्धया चेश्वरं भज ॥ ३ ॥
स त्वयाऽऽराधितः शुक्लो वितन्वन् मामकं यशः ।
छेत्ता ते हृदयग्रन्थिं औदर्यो ब्रह्मभावनः ॥ ४ ॥
मैत्रेय उवाच -
देवहूत्यपि सन्देशं गौरवेण प्रजापतेः ।
सम्यक् श्रद्धाय पुरुषं कूटस्थं अभजद्गुरुम् ॥ ५ ॥
तस्यां बहुतिथे काले भगवान् मधुसूदनः ।
कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि ॥ ६ ॥
अवादयन् तदा व्योम्नि वादित्राणि घनाघनाः ।
गायन्ति तं स्म गन्धर्वा नृत्यन्ति अप्सरसो मुदा ॥ ७ ॥
पेतुः सुमनसो दिव्याः खेचरैः अपवर्जिताः ।
प्रसेदुश्च दिशः सर्वा अम्भांसि च मनांसि च ॥ ८ ॥
तत्कर्दमाश्रमपदं सरस्वत्या परिश्रितम् ।
स्वयम्भूः साकं ऋषिभिः मरीच्यादिभिरभ्ययात् ॥ ९ ॥
भगवन्तं परं ब्रह्म सत्त्वेनांशेन शत्रुहन् ।
तत्त्वसङ्ख्यानविज्ञप्त्यै जातं विद्वानजः स्वराट् ॥ १० ॥
सभाजयन् विशुद्धेन चेतसा तच्चिकीर्षितम् ।
प्रहृष्यमाणैरसुभिः कर्दमं चेदमभ्यधात् ॥ ११ ॥
ब्रह्मोवाच -
त्वया मेऽपचितिस्तात कल्पिता निर्व्यलीकतः ।
यन्मे सञ्जगृहे वाक्यं भवान्मानद मानयन् ॥ १२ ॥
एतावत्येव शुश्रूषा कार्या पितरि पुत्रकैः ।
बाढं इति अनुमन्येत गौरवेण गुरोर्वचः ॥ १३ ॥
इमा दुहितरः सभ्य तव वत्स सुमध्यमाः ।
सर्गमेतं प्रभावैः स्वैः बृंहयिष्यन्ति अनेकधा ॥ १४ ॥
अतस्त्वं ऋषिमुख्येभ्यो यथाशीलं यथारुचि ।

आत्मजाः परिदेह्यद्य विस्तृणीहि यशो भुवि ॥ १५ ॥
वेदाहमाद्यं पुरुषं अवतीर्णं स्वमायया ।
भूतानां शेवधिं देहं बिभ्राणं कपिलं मुने ॥ १६ ॥
ज्ञानविज्ञानयोगेन कर्मणां उद्धरन्जटाः ।
हिरण्यकेशः पद्माक्षः पद्ममुद्रापदाम्बुजः ॥ १७ ॥
एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः ।
अविद्यासंशयग्रन्थिं छित्त्वा गां विचरिष्यति ॥ १८ ॥
अयं सिद्धगणाधीशः साङ्ख्याचार्यैः सुसम्मतः ।
लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः ॥ १९ ॥
मैत्रेय उवाच -
तौ आवाश्वास्य जगत्स्रष्टा कुमारैः सहनारदः ।
हंसो हंसेन यानेन त्रिधामपरमं ययौ ॥ २० ॥
गते शतधृतौ क्षत्तः कर्दमस्तेन चोदितः ।
यथोदितं स्वदुहितॄः प्रादाद्विश्वसृजां ततः ॥ २१ ॥
मरीचये कलां प्रादाद् अनसूयां अथात्रये ।
श्रद्धां अङ्गिरसेऽयच्छत् पुलस्त्याय हविर्भुवम् ॥ २२ ॥
पुलहाय गतिं युक्तां क्रतवे च क्रियां सतीम् ।
ख्यातिं च भृगवेऽयच्छद् वसिष्ठायाप्यरुन्धतीम् ॥ २३ ॥
अथर्वणेऽददाच्छान्तिं यया यज्ञो वितन्यते ।
विप्रर्षभान् कृतोद्वाहान् सदारान् समलालयत् ॥ २४ ॥
ततस्त ऋषयः क्षत्तः कृतदारा निमन्त्र्य तम् ।
प्रातिष्ठन् नन्दिमापन्नाः स्वं स्वमाश्रम मण्डलम् ॥ २५ ॥
स चावतीर्णं त्रियुगं आज्ञाय विबुधर्षभम् ।
विविक्त उपसङ्गम्य प्रणम्य समभाषत ॥ २६ ॥
अहो पापच्यमानानां निरये स्वैरमङ्गलैः ।
कालेन भूयसा नूनं प्रसीदन्तीह देवताः ॥ २७ ॥
बहुजन्मविपक्वेन सम्यग् योगसमाधिना ।
द्रष्टुं यतन्ते यतयः शून्यागारेषु यत्पदम् ॥ २८ ॥
स एव भगवानद्य हेलनं न गणय्य नः ।
गृहेषु जातो ग्राम्याणां यः स्वानां पक्षपोषणः ॥ २९ ॥
स्वीयं वाक्यमृतं कर्तुमं अतीर्णोऽसि मे गृहे ।
चिकीर्षुर्भगवान् ज्ञानं भक्तानां मानवर्धनः ॥ ३० ॥
तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव ।

यानि यानि च रोचन्ते स्वजनानां अरूपिणः ॥ ३१ ॥
त्वां सूरिभिस्तत्त्वबुभुत्सयाद्धा
    सदाभिवादार्हणपादपीठम् ।
ऐश्वर्यवैराग्ययशोऽवबोध
    वीर्यश्रिया पूर्तमहं प्रपद्ये ॥ ३२ ॥
परं प्रधानं पुरुषं महान्तं
    कालं कविं त्रिवृतं लोकपालम् ।
आत्मानुभूत्यानुगतप्रपञ्चं
    स्वच्छन्दशक्तिं कपिलं प्रपद्ये ॥ ३३ ॥
आ स्माभिपृच्छेऽद्य पतिं प्रजानां
    त्वयावतीर्णर्ण उताप्तकामः ।
परिव्रजत्पदवीमास्थितोऽहं
    चरिष्ये त्वां हृदि युञ्जन् विशोकः ॥ ३४ ॥
श्रीभगवानुवाच -
मया प्रोक्तं हि लोकस्य प्रमाणं सत्यलौकिके ।
अथाजनि मया तुभ्यं यदवोचमृतं मुने ॥ ३५ ॥
एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात् ।
प्रसङ्ख्यानाय तत्त्वानां सम्मतायात्मदर्शने ॥ ३६ ॥
एष आत्मपथोऽव्यक्तो नष्टः कालेन भूयसा ।
तं प्रवर्तयितुं देहं इमं विद्धि मया भृतम् ॥ ३७ ॥
गच्छ कामं मयाऽऽपृष्टो मयि सन्न्यस्तकर्मणा ।
जित्वा सुदुर्जयं मृत्युं अमृतत्वाय मां भज ॥ ३८ ॥
मामात्मानं स्वयंज्योतिः सर्वभूतगुहाशयम् ।
आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छसि ॥ ३९ ॥
मात्र आध्यात्मिकीं विद्यां शमनीं सर्वकर्मणाम् ।
वितरिष्ये यया चासौ भयं चातितरिष्यति ॥ ४० ॥
मैत्रेय उवाच -
एवं समुदितस्तेन कपिलेन प्रजापतिः ।
दक्षिणीकृत्य तं प्रीतो वनमेव जगाम ह ॥ ४१ ॥
व्रतं स आस्थितो मौनं आत्मैकशरणो मुनिः ।
निःसङ्गो व्यचरत् क्षोणीं अनग्निरनिकेतनः ॥ ४२ ॥
मनो ब्रह्मणि युञ्जानो यत्तत् सदसतः परम् ।
गुणावभासे विगुण एकभक्त्यानुभाविते ॥ ४३ ॥

निरहङ्कृतिर्निर्ममश्च निर्द्वन्द्वः समदृक् स्वदृक् ।
प्रत्यक्प्रशान्तधीर्धीरः प्रशान्तोर्मिरिवोदधिः ॥ ४४ ॥
वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि ।
परेण भक्तिभावेन लब्धात्मा मुक्तबन्धनः ॥ ४५ ॥
आत्मानं सर्वभूतेषु भगवन्तं अवस्थितम् ।
अपश्यत्सर्वभूतानि भगवत्यपि चात्मनि ॥ ४६ ॥
इच्छाद्वेषविहीनेन सर्वत्र समचेतसा ।
भगवद्भक्तियुक्तेन प्राप्ता भागवती गतिः ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
तृतीयस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

शौनक उवाच ।
कपिलस्तत्त्वसङ्ख्याता भगवान् आत्ममायया ।
जातः स्वयमजः साक्षाद् आत्मप्रज्ञप्तये नृणाम् ॥ १ ॥
न ह्यस्य वर्ष्मणः पुंसां वरिम्णः सर्वयोगिनाम् ।
विश्रुतौ श्रुतदेवस्य भूरि तृप्यन्ति मेऽसवः ॥ २ ॥
यद् यद् विधत्ते भगवान् स्वच्छन्दात्मात्ममायया ।
तानि मे श्रद्दधानस्य कीर्तन्यान्यनुकीर्तय ॥ ३ ॥
सूत उवाच -
द्वैपायनसखस्त्वेवं मैत्रेयो भगवांस्तथा ।
प्राहेदं विदुरं प्रीत आन्वीक्षिक्यां प्रचोदितः ॥ ४ ॥
मैत्रेय उवाच -
पितरि प्रस्थितेऽरण्यं मातुः प्रियचिकीर्षया ।
तस्मिन् बिन्दुसरेऽवात्सीत् भगवान् कपिलः किल ॥ ५ ॥
तमासीनमकर्माणं तत्त्वमार्गाग्रदर्शनम् ।
स्वसुतं देवहूत्याह धातुः संस्मरती वचः ॥ ६ ॥
देवहूतिरुवाच ।
निर्विण्णा नितरां भूमन् असत् इन्द्रियतर्षणात् ।
येन सम्भाव्यमानेन प्रपन्नान्धं तमः प्रभो ॥ ७ ॥
तस्य त्वं तमसोऽन्धस्य दुष्पारस्याद्य पारगम् ।
सच्चक्षुर्जन्मनामन्ते लब्धं मे त्वदनुग्रहात् ॥ ८ ॥
य आद्यो भगवान् पुंसां ईश्वरो वै भवान्किल ।
लोकस्य तमसान्धस्य चक्षुः सूर्य इवोदितः ॥ ९ ॥
अथ मे देव सम्मोहं अपाक्रष्टुं त्वमर्हसि ।
योऽवग्रहोऽहं मम इति इति एतस्मिन् योजितस्त्वया ॥ १० ॥
तं त्वा गताहं शरणं शरण्यं
    स्वभृत्यसंसारतरोः कुठारम् ।
जिज्ञासयाहं प्रकृतेः पूरुषस्य
    नमामि सद्धर्मविदां वरिष्ठम् ॥ ११ ॥
मैत्रेय उवाच -
इति स्वमातुर्निरवद्यमीप्सितं
    निशम्य पुंसां अपवर्गवर्धनम् ।
धियाभिनन्द्यात्मवतां सतां गतिः
    बभाष ईषत् स्मितशोभिताननः ॥ १२ ॥
श्रीभगवानुवाच -
योग आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे ।
अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य च ॥ १३ ॥
तमिमं ते प्रवक्ष्यामि यं अवोचं पुरानघे ।
ऋषीणां श्रोतुकामानां योगं सर्वाङ्गनैपुणम् ॥ १४ ॥

चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम् ।
गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये ॥ १५ ॥
अहं ममाभिमानोत्थैः कामलोभादिभिर्मलैः ।
वीतं यदा मनः शुद्धं अदुःखं असुखं समम् ॥ १६ ॥
तदा पुरुष आत्मानं केवलं प्रकृतेः परम् ।
निरन्तरं स्वयंज्योतिः अणिमानं अखण्डितम् ॥ १७ ॥
ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन चात्मना ।
परिपश्यति उदासीनं प्रकृतिं च हतौजसम् ॥ १८ ॥
न युज्यमानया भक्त्या भगवति अखिलात्मनि ।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥ १९ ॥
प्रसङ्गमजरं पाशं आत्मनः कवयो विदुः ।
स एव साधुषु कृतो मोक्षद्वारं अपावृतम् ॥ २० ॥
तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।
अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥ २१ ॥
मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ।
मत्कृते त्यक्तकर्माणः त्यक्तस्वजनबान्धवाः ॥ २२ ॥
मदाश्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति च ।
तपन्ति विविधास्तापा नैतान् मद्गतचेतसः ॥ २३ ॥
ते एते साधवः साध्वि सर्वसङ्गविवर्जिताः ।
सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥ २४ ॥
सतां प्रसङ्गान् मम वीर्यसंविदो
    भवन्ति हृत्कर्णरसायनाः कथाः ।
तज्जोषणादाश्वपवर्गवर्त्मनि
    श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥ २५ ॥
भक्त्या पुमान्जातविराग ऐन्द्रियाद्
    दृष्टश्रुतान् मद्रचनानुचिन्तया ।
चित्तस्य यत्तो ग्रहणे योगयुक्तो
    यतिष्यते ऋजुभिर्योगमार्गैः ॥ २६ ॥
असेवयायं प्रकृतेर्गुणानां
    ज्ञानेन वैराग्यविजृम्भितेन ।
योगेन मय्यर्पितया च भक्त्या
    मां प्रत्यगात्मानमिहावरुन्धे ॥ २७ ॥
देवहूतिरुवाच ।
काचित् त्वय्युचिता भक्तिः कीदृशी मम गोचरा ।
यया पदं ते निर्वाणं अञ्जसा अन्वाश्नवै अहम् ॥ २८ ॥
यो योगो भगवद्बाणो निर्वाणात्मंस्त्वयोदितः ।
कीदृशः कति चाङ्गानि यतस्तत्त्वावबोधनम् ॥ २९ ॥
तद् एतन्मे विजानीहि यथाहं मन्दधीर्हरे ।

सुखं बुद्ध्येय दुर्बोधं योषा भवदनुग्रहात् ॥ ३० ॥
मैत्रेय उवाच ।
विदित्वार्थं कपिलो मातुरित्थं
    जातस्नेहो यत्र तन्वाभिजातः ।
तत्त्वाम्नायं यत्प्रवदन्ति साङ्ख्यं
    प्रोवाच वै भक्तिवितानयोगम् ॥ ३१ ॥
श्रीभगवानुवाच -
देवानां गुणलिङ्गानां आनुश्रविककर्मणाम् ।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥ ३२ ॥
अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ।
जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ ३३ ॥
नैकात्मतां मे स्पृहयन्ति केचिन्
    मत्पादसेवाभिरता मदीहाः ।
येऽन्योन्यतो भागवताः प्रसज्य
    सभाजयन्ते मम पौरुषाणि ॥ ३४ ॥
पश्यन्ति ते मे रुचिराण्यम्ब सन्तः
    प्रसन्नवक्त्रारुणलोचनानि ।
रूपाणि दिव्यानि वरप्रदानि
    साकं वाचं स्पृहणीयां वदन्ति ॥ ३५ ॥
तैर्दर्शनीयावयवैरुदार
    विलासहासेक्षितवामसूक्तैः ।
हृतात्मनो हृतप्राणांश्च भक्तिः
    अनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते ॥ ३६ ॥
अथो विभूतिं मम मायाविनस्तां
    ऐश्वर्यमष्टाङ्गमनुप्रवृत्तम् ।
श्रियं भागवतीं वास्पृहयन्ति भद्रां
    परस्य मे तेऽश्नुवते तु लोके ॥ ३७ ॥
न कर्हिचिन्मत्पराः शान्तरूपे
    नङ्क्ष्यन्ति नो मेऽनिमिषो लेढि हेतिः ।
येषामहं प्रिय आत्मा सुतश्च
    सखा गुरुः सुहृदो दैवमिष्टम् ॥ ३८ ॥
इमं लोकं तथैव अमुं आत्मानं उभयायिनम् ।
आत्मानं अनु ये चेह ये रायः पशवो गृहाः ॥ ३९ ॥
विसृज्य सर्वान् अन्यांश्च मामेवं विश्वतोमुखम् ।
भजन्ति अनन्यया भक्त्या तान्मृत्योरतिपारये ॥ ४० ॥
नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात् ।
आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते ॥ ४१ ॥
मद्भयाद् वाति वातोऽयं सूर्यस्तपति मद्भयात् ।

वर्षतीन्द्रो दहत्यग्निः मृत्युश्चरति मद्भयात् ॥ ४२ ॥
ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ।
क्षेमाय पादमूलं मे प्रविशन्ति अकुतोभयम् ॥ ४३ ॥
एतावान् एव लोकेऽस्मिन् पुंसां निःश्रेयसोदयः ।
तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
तृतीयस्कन्धे पञ्चविंशोऽध्यायः ॥ २५ ॥

श्रीभगवानुवाच ।
अथ ते सम्प्रवक्ष्यामि तत्त्वानां लक्षणं पृथक् ।
यद्विदित्वा विमुच्येत पुरुषः प्राकृतैर्गुणैः ॥ १ ॥
ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् ।
यदाहुर्वर्णये तत्ते हृदयग्रन्थिभेदनम् ॥ २ ॥
अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ।
प्रत्यग्धामा स्वयंज्योतिः विश्वं येन समन्वितम् ॥ ३ ॥
स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः ।
यदृच्छयैवोपगतां अभ्यपद्यत लीलया ॥ ४ ॥
गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः ।
विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥ ५ ॥
एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ।
कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥ ६ ॥
तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतम् ।
भवति अकर्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥ ७ ॥
कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।
भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम् ॥ ८ ॥
देवहूतिरुवाच -
प्रकृतेः पुरुषस्यापि लक्षणं पुरुषोत्तम ।
ब्रूहि कारणयोरस्य सदसच्च यदात्मकम् ॥ ९ ॥
श्रीभगवानुवाच -
यत्तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिं प्राहुः अविशेषं विशेषवत् ॥ १० ॥
पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।
एतत् चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥ ११ ॥
महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः ।
तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ॥ १२ ॥
इन्द्रियाणि दश श्रोत्रं त्वग् दृक् रसननासिकाः ।
वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते ॥ १३ ॥
मनो बुद्धिरहङ्कारः चित्तमित्यन्तरात्मकम् ।
चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ॥ १४ ॥
एतावानेव सङ्ख्यातो ब्रह्मणः सगुणस्य ह ।
सन्निवेशो मया प्रोक्तो यः कालः पञ्चविंशकः ॥ १५ ॥

प्रभावं पौरुषं प्राहुः कालमेके यतो भयम् ।
अहङ्कारविमूढस्य कर्तुः प्रकृतिमीयुषः ॥ १६ ॥
प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि ।
चेष्टा यतः स भगवान् काल इत्युपलक्षितः ॥ १७ ॥
अन्तः पुरुषरूपेण कालरूपेण यो बहिः ।
समन्वेत्येष सत्त्वानां भगवान् आत्ममायया ॥ १८ ॥
दैवात्क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् ।
आधत्त वीर्यं सासूत महत्तत्त्वं हिरण्मयम् ॥ १९ ॥
विश्वमात्मगतं व्यञ्जन् कूटस्थो जगदङ्कुरः ।
स्वतेजसा पिबत् तीव्रं आत्मप्रस्वापनं तमः ॥ २० ॥
यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवतः पदम् ।
यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम् ॥ २१ ॥
स्वच्छत्वं अविकारित्वं शान्तत्वमिति चेतसः ।
वृत्तिभिर्लक्षणं प्रोक्तं यथापां प्रकृतिः परा ॥ २२ ॥
महत्तत्त्वाद् विकुर्वाणाद् भगवद्वीर्यसम्भवात् ।
क्रियाशक्तिः अहङ्कारः त्रिविधः समपद्यत ॥ २३ ॥
वैकारिकस्तैजसश्च तामसश्च यतो भवः ।
मनसश्चेन्द्रियाणां च भूतानां महतामपि ॥ २४ ॥
सहस्रशिरसं साक्षाद् यं अनन्तं प्रचक्षते ।
सङ्कर्षणाख्यं पुरुषं भूतेन्द्रियमनोमयम् ॥ २५ ॥
कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम् ।
शान्तघोरविमूढत्वं इति वा स्यादहङ्कृतेः ॥ २६ ॥
वैकारिकाद् विकुर्वाणात् मनस्तत्त्वमजायत ।
यत्सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भवः ॥ २७ ॥
यद् विदुर्ह्यनिरुद्धाख्यं हृषीकाणां अधीश्वरम् ।
शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः ॥ २८ ॥
तैजसात्तु विकुर्वाणाद् बुद्धितत्त्वमभूत्सति ।
द्रव्यस्फुरणविज्ञानं इन्द्रियाणामनुग्रहः ॥ २९ ॥
संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च ।
स्वाप इत्युच्यते बुद्धेः लक्षणं वृत्तितः पृथक् ॥ ३० ॥
तैजसानि इन्द्रियाण्येव क्रियाज्ञानविभागशः ।
प्राणस्य हि क्रियाशक्तिः बुद्धेर्विज्ञानशक्तिता ॥ ३१ ॥
तामसाच्च विकुर्वाणाद् भगवद्वीर्यचोदितात् ।

पत्युर्निगदितं श्रुत्वा दैत्यदानवयूथपाः
रसां निर्विविशू राजन्विष्णुपार्षद ताडिताः २५
अथ ताक्ष्र्यसुतो ज्ञात्वा विराट्प्रभुचिकीर्षितम्
बबन्ध वारुणैः पाशैर्बलिं सूत्येऽहनि क्रतौ २६
हाहाकारो महानासीद्रोदस्योः सर्वतो दिशम्
निगृह्यमाणेऽसुरपतौ विष्णुना प्रभविष्णुना २७
तं बद्धं वारुणैः पाशैर्भगवानाह वामनः
नष्टश्रियं स्थिरप्रज्ञमुदारयशसं नृप २८
पदानि त्रीणि दत्तानि भूमेर्मह्यं त्वयासुर
द्वाभ्यां क्रान्ता मही सर्वा तृतीयमुपकल्पय २९
यावत्तपत्यसौ गोभिर्यावदिन्दुः सहोडुभिः
यावद्वर्षति पर्जन्यस्तावती भूरियं तव ३०
पदैकेन मयाक्रान्तो भूर्लोकः खं दिशस्तनोः
स्वर्लोकस्ते द्वितीयेन पश्यतस्ते स्वमात्मना ३१
प्रतिश्रुतमदातुस्ते निरये वास इष्यते
विश त्वं निरयं तस्माद्गुरुणा चानुमोदितः ३२
वृथा मनोरथस्तस्य दूरः स्वर्गः पतत्यधः
प्रतिश्रुतस्यादानेन योऽर्थिनं विप्रलम्भते ३३
विप्रलब्धो ददामीति त्वयाहं चाढ्यमानिना
तद्व्यलीकफलं भुङ्क्ष्व निरयं कतिचित्समाः ३४
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामष्टमस्कन्धे वामनप्रादुर्भावे बलिनिग्रहो नामैकविंशोऽध्यायः

# श्रीमद्भागवतपुराणम्/स्कन्धः ८/अध्यायः २२



श्रीमद्‌भागवत महापुराण

अष्टमः स्कन्धः - द्वाविंशोऽध्यायः

बलिवचनं ब्रह्मणो वचनं भगवकृतं बलेः प्रशसनं तस्मै वरदानं च -

श्रीशुक उवाच -

(अनुष्टुप्)

एवं विप्रकृतो राजन् बलिर्भगवतासुरः ।

भिद्यमानोऽप्यभिन्नात्मा प्रत्याहाविक्लवं वचः ॥ १ ॥

श्रीबलिरुवाच -

यद्युत्तमश्लोक भवान्ममेरितं

वचो व्यलीकं सुरवर्य मन्यते ।

करोम्यृतं तन्न भवेत्प्रलम्भनं

पदं तृतीयं कुरु शीर्ष्णि मे निजम् ॥ २ ॥

बिभेमि नाहं निरयात् पदच्युतो

न पाशबन्धाद्व्यसनाद् दुरत्ययात् ।

नैवार्थकृच्छ्राद्‌भवतो विनिग्रहाद्

असाधुवादाद्‌भृशमुद्विजे यथा ॥ ३ ॥

(अनुष्टुप्)

पुंसां श्लाघ्यतमं मन्ये दण्डमर्हत्तमार्पितम् ।

यं न माता पिता भ्राता सुहृदश्चादिशन्ति हि ॥ ४ ॥

त्वं नूनमसुराणां नः परोक्षः परमो गुरुः ।

यो नोऽनेकमदान्धानां विभ्रंशं चक्षुरादिशत् ॥ ५ ॥

यस्मिन् वैरानुबन्धेन व्यूढेन विबुधेतराः ।

बहवो लेभिरे सिद्धिं यामु हैकान्तयोगिनः ॥ ६ ॥

तेनाहं निगृहीतोऽस्मि भवता भूरिकर्मणा ।

बद्धश्च वारुणैः पाशैः नातिव्रीडे न च व्यथे ॥ ७ ॥

पितामहो मे भवदीयसम्मतः

प्रह्लाद आविष्कृतसाधुवादः ।

भवद्विपक्षेण विचित्रवैशसं

संप्रापितस्त्वं परमः स्वपित्रा ॥ ८ ॥

किमात्मनानेन जहाति योऽन्ततः

किं रिक्थहारैः स्वजनाख्यदस्युभिः ।

किं जायया संसृतिहेतुभूतया

मर्त्यस्य गेहैः किमिहायुषो व्ययः ॥ ९ ॥

इत्थं स निश्चित्य पितामहो महान्

अगाधबोधो भवतः पादपद्मम् ।

ध्रुवं प्रपेदे ह्यकुतोभयं जनाद्

भीतः स्वपक्षक्षपणस्य सत्तम ॥ १० ॥

अथाहमप्यात्मरिपोस्तवान्तिकं

दैवेन नीतः प्रसभं त्याजितश्रीः ।

इदं कृतान्तान्तिकवर्ति जीवितं

ययाध्रुवं स्तब्धमतिर्न बुध्यते ॥ ११ ॥

श्रीशुक उवाच -

(अनुष्टुप्)

तस्येत्थं भाषमाणस्य प्रह्लादो भगवत्प्रियः ।

आजगाम कुरुश्रेष्ठ राकापतिरिवोत्थितः ॥ १२ ॥

तमिन्द्रसेनः स्वपितामहं श्रिया

विराजमानं नलिनायतेक्षणम् ।

प्रांशुं पिशंगांबरमञ्जनत्विषं

प्रलंबबाहुं शुभगर्षभमैक्षत ॥ १३ ॥

तस्मै बलिर्वारुणपाशयन्त्रितः

समर्हणं नोपजहार पूर्ववत् ।

ननाम मूर्ध्नाश्रुविलोललोचनः

सव्रीडनीचीनमुखो बभूव ह ॥ १४ ॥

स तत्र हासीनमुदीक्ष्य सत्पतिं

हरिं सुनन्दाद्यनुगैरुपासितम् ।

उपेत्य भूमौ शिरसा महामना

ननाम मूर्ध्ना पुलकाश्रुविक्लवः ॥ १५ ॥

श्रीप्रह्लाद उवाच -

त्वयैव दत्तं पदमैन्द्रमूर्जितं

हृतं तदेवाद्य तथैव शोभनम् ।

मन्ये महानस्य कृतो ह्यनुग्रहो

विभ्रंशितो यच्छ्रिय आत्ममोहनात् ॥ १६ ॥

यया हि विद्वानपि मुह्यते यतः

तत् को विचष्टे गतिमात्मनो यथा ।

तस्मै नमस्ते जगदीश्वराय वै

नारायणायाखिललोकसाक्षिणे ॥ १७ ॥

श्रीशुक उवाच -

(अनुष्टुप्)

तस्यानुश्रृवतो राजन् प्रह्लादस्य कृताञ्जलेः ।

हिरण्यगर्भो भगवान् उवाच मधुसूदनम् ॥ १८ ॥

बद्धं वीक्ष्य पतिं साध्वी तत्पत्नी भयविह्वला ।

प्राञ्जलिः प्रणतोपेन्द्रं बभाषेऽवांमुखी नृप ॥ १९ ॥

श्रीविन्ध्यावलिरुवाच -

क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते

स्वाम्यं तु तत्र कुधियोऽपर ईश कुर्युः ।

कर्तुः प्रभोस्तव किमस्यत आवहन्ति

त्यक्तह्रियस्त्वदवरोपितकर्तृवादाः ॥ २० ॥

श्रीब्रह्मोवाच -

(अनुष्टुप्)

भूतभावन भूतेश देवदेव जगन्मय ।

मुञ्चैनं हृतसर्वस्वं नायमर्हति निग्रहम् ॥ २१ ॥

कृत्स्ना तेऽनेन दत्ता भूर्लोकाः कर्मार्जिताश्च ये ।

निवेदितं च सर्वस्वं आत्माविक्लवया धिया ॥ २२ ॥

यत्पादयोरशठधीः सलिलं प्रदाय

दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम् ।

अप्युत्तमां गतिमसौ भजते त्रिलोकीं

दाश्वानविक्लवमनाः कथमार्तिमृच्छेत् ॥ २३ ॥

श्रीभगवानुवाच -

(अनुष्टुप्)

ब्रह्मन् यमनुगृह्णामि तद्विशो विधुनोम्यहम् ।

यन्मदः पुरुषः स्तब्धो लोकं मां चावमन्यते ॥ २४ ॥

यदा कदाचित् जीवात्मा संसरन्निजकर्मभिः ।

नानायोनिष्वनीशोऽयं पौरुषीं गतिमाव्रजेत् ॥ २५ ॥

जन्मकर्मवयोरूप विद्यैश्वर्यधनादिभिः ।

यद्यस्य न भवेत् स्तंभः तत्रायं मदनुग्रहः ॥ २६ ॥

मानस्तम्भनिमित्तानां जन्मादीनां समन्ततः ।

सर्वश्रेयःप्रतीपानां हन्त मुह्येन्न मत्परः ॥ २७ ॥

एष दानवदैत्यानामग्रनीः कीर्तिवर्धनः ।

अजैषीदजयां मायां सीदन्नपि न मुह्यति ॥ २८ ॥

क्षीणरिक्थश्च्युतः स्थानात्क्षिप्तो बद्धश्च शत्रुभिः ।

ज्ञातिभिश्च परित्यक्तो यातनामनुयापितः ॥ २९ ॥

गुरुणा भर्त्सितः शप्तो जहौ सत्यं न सुव्रतः ।

छलैरुक्तो मया धर्मो नायं त्यजति सत्यवाक् ॥ ३० ॥

एष मे प्रापितः स्थानं दुष्प्रापं अमरैरपि ।

सावर्णेरन्तरस्यायं भवितेन्द्रो मदाश्रयः ॥ ३१ ॥

तावत् सुतलमध्यास्तां विश्वकर्मविनिर्मितम् ।

यदाधयो व्याधयश्च क्लमस्तन्द्रा पराभवः ।

नोपसर्गा निवसतां सम्भवन्ति ममेक्षया ॥ ३२ ॥

इन्द्रसेन महाराज याहि भो भद्रमस्तु ते ।

सुतलं स्वर्गिभिः प्रार्थ्यं ज्ञातिभिः परिवारितः ॥ ३३ ॥

न त्वां अभिभविष्यन्ति लोकेशाः किमुतापरे ।

त्वत् शासनातिगान् दैत्यान् चक्रं मे सूदयिष्यति ॥ ३४ ॥

रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम् ।

सदा सन्निहितं वीर तत्र मां द्रक्ष्यते भवान् ॥ ३५ ॥

तत्र दानवदैत्यानां संगात् ते भाव आसुरः ।

दृष्ट्वा मदनुभावं वै सद्यः कुण्ठो विनंक्ष्यति ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

अष्टमस्कन्धे वामनप्रादुर्भवे बलिवामनसंवादे द्वाविंशोऽध्यायः ॥ २२ ॥

हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

# श्रीमद्भागवतपुराणम्/स्कन्धः ८/अध्यायः २३

https://sa.wikisource.org/s/zhe

< श्रीमद्भागवतपुराणम् | स्कन्धः ८

श्रीमद्भागवत महापुराण

अष्टमः स्कन्धः - त्रविंशोऽध्यायः

बलेः सुतललोकगमनं वामनस्य उपेंद्रपदेऽभिषेकश्च -

श्रीशुक उवाच -

इत्युक्तवन्तं पुरुषं पुरातनं

महानुभावोऽखिलसाधुसंमतः ।

बद्धाञ्जलिर्बाष्पकलाकुलेक्षणो

भक्त्युत्कलो गद्‌गदया गिराब्रवीत् ॥ १ ॥

श्रीबलिरुवाच -

अहो प्रणामाय कृतः समुद्यमः

प्रपन्नभक्तार्थविधौ समाहितः ।

यल्लोकपालैस्त्वदनुग्रहोऽमरैः

अलब्धपूर्वोऽपसदेऽसुरेऽर्पितः ॥ २ ॥

श्रीशुक उवाच -

(अनुष्टुप्)

इत्युक्त्वा हरिमानत्य ब्रह्माणं सभवं ततः ।

विवेश सुतलं प्रीतो बलिर्मुक्तः सहासुरैः ॥ ३ ॥

एवं इन्द्राय भगवान् प्रत्यानीय त्रिविष्टपम् ।

पूरयित्वादितेः कामं अशासत् सकलं जगत् ॥ ४ ॥

लब्धप्रसादं निर्मुक्तं पौत्रं वंशधरं बलिम् ।

निशाम्य भक्तिप्रवणः प्रह्लाद इदमब्रवीत् ॥ ५ ॥

श्रीप्रह्लाद उवाच -

नेमं विरिञ्चो लभते प्रसादं

न श्रीर्न शर्वः किमुतापरेऽन्ये ।

यन्नोऽसुराणामसि दुर्गपालो

विश्वाभिवन्द्यैरभिवन्दिताङ्‌घ्रिः ॥ ६ ॥

यत्पादपद्ममकरन्दनिषेवणेन

ब्रह्मादयः शरणदाश्नुवते विभूतीः ।

कस्माद्वयं कुसृतयः खलयोनयस्ते

दाक्षिण्यदृष्टिपदवीं भवतः प्रणीताः ॥ ७ ॥

चित्रं तवेहितमहोऽमितयोगमाया

लीलाविसृष्टभुवनस्य विशारदस्य ।

सर्वात्मनः समदृशोऽविषमः स्वभावो

भक्तप्रियो यदसि कल्पतरुस्वभावः ॥ ८ ॥

श्रीभगवानुवाच -

(अनुष्टुप्)

वत्स प्रह्राद भद्रं ते प्रयाहि सुतलालयम् ।

मोदमानः स्वपौत्रेण ज्ञातीनां सुखमावह ॥ ९ ॥

नित्यं द्रष्टासि मां तत्र गदापाणिमवस्थितम् ।

मद्दर्शनमहाह्लाद ध्वस्तकर्मनिबन्धनः ॥ १० ॥

श्रीशुक उवाच -

आज्ञां भगवतो राजन् प्रह्रादो बलिना सह ।

बाढमित्यमलप्रज्ञो मूर्ध्न्याधाय कृताञ्जलिः ॥ ११ ॥

परिक्रम्यादिपुरुषं सर्वासुरचमूपतिः ।

प्रणतः तदनुज्ञातः प्रविवेश महाबिलम् ॥ १२ ॥

अथाहोशनसं राजन् हरिर्नारायणोऽन्तिके ।

आसीनं ऋत्विजां मध्ये सदसि ब्रह्मवादिनाम् ॥ १३ ॥

ब्रह्मन् सन्तनु शिष्यस्य कर्मच्छिद्रं वितन्वतः ।

यत् तत् कर्मसु वैषम्यं ब्रह्मदृष्टं समं भवेत् ॥ १४ ॥

श्रीशुक्र उवाच -

कुतस्तत्कर्मवैषम्यं यस्य कर्मेश्वरो भवान् ।

यज्ञेशो यज्ञपुरुषः सर्वभावेन पूजितः ॥ १५ ॥

मंत्रतः तंत्रतः छिद्रं देशकालार्हवस्तुतः ।

सर्वं करोति निश्छिद्रं अनुसंकीर्तनं तव ॥ १६ ॥

तथापि वदतो भूमन् करिष्याम्यनुशासनम् ।

एतच्छ्रेयः परं पुंसां यत् तवाज्ञा अनुपालनम् ॥ १७ ॥

श्रीशुक उवाच -

अभिनन्द्य हरेराज्ञां उशना भगवानिति ।

यज्ञच्छिद्रं समाधत्त बलेर्विप्रर्षिभिः सह ॥ १८ ॥

एवं बलेर्महीं राजम् भिक्षित्वा वामनो हरिः ।

ददौ भ्रात्रे महेन्द्राय त्रिदिवं यत्परैर्हृतम् ॥ १९ ॥

प्रजापतिपतिर्ब्रह्मा देवर्षिपितृभूमिपैः ।

दक्षभृग्वङ्गिरोमुख्यैः कुमारेण भवेन च ॥ २० ॥

कश्यपस्यादितेः प्रीत्यै सर्वभूतभवाय च ।

लोकानां लोकपालानां अकरोद् वामनं पतिम् ॥ २१ ॥

वेदानां सर्वदेवानां धर्मस्य यशसः श्रियः ।

मंगलानां व्रतानां च कल्पं स्वर्गापवर्गयोः ॥ २२ ॥

उपेन्द्रं कल्पयां चक्रे पतिं सर्वविभूतये ।

तदा सर्वाणि भूतानि भृशं मुमुदिरे नृप ॥ २३ ॥

ततस्त्विन्द्रः पुरस्कृत्य देवयानेन वामनम् ।

लोकपालैर्दिवं निन्ये ब्रह्मणा चानुमोदितः ॥ २४ ॥

प्राप्य त्रिभुवनं चेन्द्र उपेन्द्रभुजपालितः ।

श्रिया परमया जुष्टो मुमुदे गतसाध्वसः ॥ २५ ॥

ब्रह्मा शर्वः कुमारश्च भृग्वाद्या मुनयो नृप ।

पितरः सर्वभूतानि सिद्धा वैमानिकाश्च ये ॥ २६ ॥

सुमहत्कर्म तद्विष्णोः गायन्तः परमाद्भुतम् ।

धिष्ण्यानि स्वानि ते जग्मुः अदितिं च शशंसिरे ॥ २७ ॥

सर्वं एतन्मयाख्यातं भवतः कुलनन्दन ।

उरुक्रमस्य चरितं श्रोतॄणां अघमोचनम् ॥ २८ ॥

पारं महिम्न उरुविक्रमतो गृणानो

यः पार्थिवानि विममे स रजांसि मर्त्यः ।

किं जायमान उत जात उपैति मर्त्य

इत्याह मन्त्रदृगृषिः पुरुषस्य यस्य ॥ २९ ॥

(अनुष्टुप्)

य इदं देवदेवस्य हरेरद्भुतकर्मणः ।

अवतारानुचरितं श्रृण्वन्याति परां गतिम् ॥ ३० ॥

क्रियमाणे कर्मणीदं दैवे पित्र्येऽथ मानुषे ।

यत्र यत्रानुकीर्त्येत तत्तेषां सुकृतं विदुः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

अष्टमस्कन्धे वामनावतारचरिते त्रयोविंशोऽध्यायः ॥ २३ ॥

हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

# श्रीमद्भागवतपुराणम्/स्कन्धः ८/अध्यायः २४

https://sa.wikisource.org/s/zhf



श्रीमद्भागवत महापुराण

अष्टमः स्कन्धः - चतुर्विंशोऽध्यायः

मत्स्यावतारकथा -

श्रीराजोवाच -

भगवन् श्रोतुमिच्छामि हरेरद्भुतकर्मणः ।

अवतारकथामाद्यां मायामत्स्यविडम्बनम् ॥ १ ॥

यदर्थमदधाद् रूपं मात्स्यं लोकजुगुप्सितम् ।

तमःप्रकृतिदुर्मर्षं कर्मग्रस्त इवेश्वरः ॥ २ ॥

एतन्नो भगवन्सर्वं यथावद्वक्तुमर्हसि ।

उत्तमश्लोकचरितं सर्वलोकसुखावहम् ॥ ३ ॥

श्रीसूत उवाच -

इत्युक्तो विष्णुरातेन भगवान् बान्बादरायणिः ।

उवाच चरितं विष्णोः मत्स्यरूपेण यत्कृतम् ॥ ४ ॥

श्रीशुक उवाच -

गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः ।

रक्षां इच्छन् तनु धत्ते धर्मस्यार्थस्य चैव हि ॥ ५ ॥

उच्चावचेषु भूतेषु चरन् वायुरिवेश्वरः ।

नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः ॥ ६ ॥

आसीद् अतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः ।

समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप ॥ ७ ॥

कालेनागतनिद्रस्य धातुः शिशयिषोर्बली ।

मुखतो निःसृतान् वेदान् हयग्रीवोऽन्तिकेऽहरत् ॥ ८ ॥

ज्ञात्वा तद् दानवेन्द्रस्य हयग्रीवस्य चेष्टितम् ।

दधार शफरीरूपं भगवान् हरिरीश्वरः ॥ ९ ॥

तत्र राजऋषिः कश्चित् नाम्ना सत्यव्रतो महान् ।

नारायणपरोऽतप्यत् तपः स सलिलाशनः ॥ १० ॥

योऽसौ अस्मिन् महाकल्पे तनयः स विवस्वतः ।
श्राद्धदेव इति ख्यातो मनुत्वे हरिणार्पितः ॥ ११ ॥
एकदा कृतमालायां कुर्वतो जलतर्पणम् ।
तस्याञ्जलि उदके काचित् शफर्येकाभ्यपद्यत ॥ १२ ॥
सत्यव्रतोऽञ्जलिगतां सह तोयेन भारत ।
उत्ससर्ज नदीतोये शफरीं द्रविडेश्वरः ॥ १३ ॥
तं आह सातिकरुणं महाकारुणिकं नृपम् ।
यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल ।
कथं विसृजसे राजन् भीतामस्मिन् सरिज्जले ॥ १४ ॥
तमात्मनोऽनुग्रहार्थं प्रीत्या मत्स्यवपुर्धरम् ।
अजानन् रक्षणार्थाय शफर्याः स मनो दधे ॥ १५ ॥
तस्या दीनतरं वाक्यं आश्रुत्य स महीपतिः ।
कलशाप्सु निधायैनां दयालुर्निन्य आश्रमम् ॥ १६ ॥
सा तु तत्रैकरात्रेण वर्धमाना कमण्डलौ ।
अलब्ध्वाऽऽत्मावकाशं वा इदमाह महीपतिम् ॥ १७ ॥
नाहं कमण्डलौ अवस्मिन् कृच्छ्रं वस्तुमिहोत्सहे ।
कल्पयौकः सुविपुलं यत्राहं निवसे सुखम् ॥ १८ ॥
स एनां तत आदाय न्यधादौदञ्चनोदके ।
तत्र क्षिप्ता मुहूर्तेन हस्तत्रयमवर्धत ॥ १९ ॥
न मे एतद् अलं राजन् सुखं वस्तुमुदञ्चनम् ।
पृथु देहि पदं मह्यं यत्त्वाहं शरणं गता ॥ २० ॥
तत आदाय सा राज्ञा क्षिप्ता राजन् सरोवरे ।
तद् आवृत्यात्मना सोऽयं महामीनोऽन्ववर्धत ॥ २१ ॥
नैतन्मे स्वस्तये राजन् उदकं सलिलौकसः ।
निधेहि रक्षायोगेन ह्रदे मामविदासिनि ॥ २२ ॥
इत्युक्तः सोऽनयन्मत्स्यं तत्र तत्राविदासिनि ।
जलाशयेऽसम्मितं तं समुद्रे प्राक्षिपज्झषम् ॥ २३ ॥
क्षिप्यमाणस्तमाहेदं इह मां मकरादयः ।
अदन्त्यतिबला वीर मां नेहोत्स्रष्टुमर्हसि ॥ २४ ॥
एवं विमोहितस्तेन वदता वल्गुभारतीम् ।

तमाह को भवान् अस्मान् मत्स्यरूपेण मोहयन् ॥ २५ ॥

नैवं वीर्यो जलचरो दृष्टोऽस्माभिः श्रुतोऽपि वा ।

यो भवान् योजनशतं अह्नाभिव्यानशे सरः ॥ २६ ॥

नूनं त्वं भगवान् साक्षात् हरिर्नारायणोऽव्ययः ।

अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥ २७ ॥

नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर ।

भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मगतिर्विभो ॥ २८ ॥

सर्वे लीलावतारास्ते भूतानां भूतिहेतवः ।

ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥ २९ ॥

न तेऽरविन्दाक्ष पदोपसर्पणं

मृषा भवेत्सर्वसुहृत् प्रियात्मनः ।

यथेतरेषां पृथगात्मनां सतां

अदीदृशो यद्वपुरद्‌भुतं हि नः ॥ ३० ॥

श्रीशुक उवाच -

इति ब्रुवाणं नृपतिं जगत्पतिः

सत्यव्रतं मत्स्यवपुर्युगक्षये ।

विहर्तुकामः प्रलयार्णवेऽब्रवीत्

चिकीर्षुः एकान्तजनप्रियः प्रियम् ॥ ३१ ॥

श्रीभगवानुवाच -

(अनुष्टुप्)

सप्तमे ह्यद्यतनाद् ऊर्ध्वं अहन्येतदरिन्दम ।

निमंक्ष्यत्यप्ययाम्भोधौ त्रैलोक्यं भूर्भुवादिकम् ॥ ३२ ॥

त्रिलोक्यां लीयमानायां संवर्ताम्भसि वै तदा ।

उपस्थास्यति नौः काचिद् विशाला त्वां मयेरिता ॥ ३३ ॥

त्वं तावदोषधीः सर्वा बीजानि उच्चावचानि च ।

सप्तर्षिभिः परिवृतः सर्वसत्त्वोपबृंहितः ॥ ३४ ॥

आरुह्य बृहतीं नावं विचरिष्यस्यविक्लवः ।

एकार्णवे निरालोके ऋषीणामेव वर्चसा ॥ ३५ ॥

दोधूयमानां तां नावं समीरेण बलीयसा ।

उपस्थितस्य मे शृंगे निबध्नीहि महाहिना ॥ ३६ ॥

अहं त्वां ऋषिभिः साकं सहनावमुदन्वति ।

विकर्षन् विचरिष्यामि यावद्ब्राह्मी निशा प्रभो ॥ ३७ ॥

मदीयं महिमानं च परं ब्रह्मेति शब्दितम् ।

वेत्स्यसि अनुगृहीतं मे संप्रश्नैर्विवृतं हृदि ॥ ३८ ॥

इत्थमादिश्य राजानं हरिरन्तरधीयत ।

सोऽन्ववैक्षत तं कालं यं हृषीकेश आदिशत् ॥ ३९ ॥

आस्तीर्य दर्भान् प्राक्कूलान् राजर्षिः प्रागुदंमुखः ।

निषसाद हरेः पादौ चिन्तयन् मत्स्यरूपिणः ॥ ४० ॥

ततः समुद्र उद्वेलः सर्वतः प्लावयन् महीम् ।

वर्धमानो महामेघैः वर्षद्भिः समदृश्यत ॥ ४१ ॥

ध्यायन् भगवदादेशं ददृशे नावमागताम् ।

तामारुरोह विप्रेन्द्रैः आदायौषधिवीरुधः ॥ ४२ ॥

तं ऊचुर्मुनयः प्रीता राजन् ध्यायस्व केशवम् ।

स वै नः संक्स्द् अस्माद् अविता शं विधास्यति ॥ ४३ ॥

सोऽनुध्यातस्ततो राज्ञा प्रादुरासीन् महार्णवे ।

एकशृंगधरो मत्स्यो हैमो नियुतयोजनः ॥ ४४ ॥

निबध्य नावं तत् श्रृंगे यथोक्तो हरिणा पुरा ।

वरत्रेणाहिना तुष्टः तुष्टाव मधुसूदनम् ॥ ४५ ॥

श्रीराजोवाच -

अनाद्यविद्योपहतात्मसंविदः

तन्मूलसंसारपरिश्रमातुराः ।

यदृच्छयेहोपसृता यमाप्नुयुः

विमुक्तिदो नः परमो गुरुर्भवान् ॥ ४६ ॥

जनोऽबुधोऽयं निजकर्मबन्धनः

सुखेच्छया कर्म समीहतेऽसुखम् ।

यत्सेवया तां विधुनोत्यसन्मतिं

ग्रन्थिं स भिन्द्याद् हृदयं स नो गुरुः ॥ ४७ ॥

यत्सेवयाग्नेरिव रुद्ररोदनं

पुमान् विजह्यान् मलमात्मनस्तमः ।

भजेत वर्णं निजमेष सोऽव्ययो

भूयात् स ईशः परमो गुरोर्गुरुः ॥ ४८ ॥

न यत्प्रसादायुतभागलेशं

अन्ये च देवा गुरवो जनाः स्वयम् ।

कर्तुं समेताः प्रभवन्ति पुंसः

तं ईश्वरं त्वां शरणं प्रपद्ये ॥ ४९ ॥

अचक्षुरन्धस्य यथाग्रणीः कृतः

तथा जनस्याविदुषोऽबुधो गुरुः ।

त्वं अर्कदृक् सर्वदृशां समीक्षणो

वृतो गुरुर्नः स्वगतिं बुभुत्सताम् ॥ ५० ॥

जनो जनस्यादिशतेऽसतीं गतिं

यया प्रपद्येत दुरत्ययं तमः ।

त्वं त्वव्ययं ज्ञानममोघमञ्जसा

प्रपद्यते येन जनो निजं पदम् ॥ ५१ ॥

त्वं सर्वलोकस्य सुहृत् प्रियेश्वरो

ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिः ।

तथापि लोको न भवन्तमन्धधीः

जानाति सन्तं हृदि बद्धकामः ॥ ५२ ॥

तं त्वामहं देववरं वरेण्यं

प्रपद्य ईशं प्रतिबोधनाय ।

छिन्ध्यर्थदीपैर्भगवन् वचोभिः

ग्रन्थीन् हृदय्यान् विवृणु स्वमोकः ॥ ५३ ॥

श्रीशुक उवाच -

(अनुष्टुप्)

इत्युक्तवन्तं नृपतिं भगवान् आदिपूरुषः ।

मत्स्यरूपी महाम्भोधौ विहरन् तत्त्वमब्रवीत् ॥ ५४ ॥

पुराणसंहितां दिव्यां सांख्ययोगक्रियावतीम् ।

सत्यव्रतस्य राजर्षेः आत्मगुह्यमशेषतः ॥ ५५ ॥

अश्रौषीद् ऋषिभिः साकं आत्मतत्त्वं असंशयम् ।

नाव्यासीनो भगवता प्रोक्तं ब्रह्म सनातनम् ॥ ५६ ॥

अतीतप्रलयापाय उत्थिताय स वेधसे ।

हत्वासुरं हयग्रीवं वेदान्प्रत्याहरद्धरिः ॥ ५७ ॥

स तु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः ।

विष्णोः प्रसादात् कल्पेऽस्मिन् आसीत् वैवस्वतो मनुः ॥ ५८ ॥

सत्यव्रतस्य राजर्षेः मायामत्स्यस्य शार्ङ्गिणः ।

संवादं महदाख्यानं श्रुत्वा मुच्येत किल्बिषात् ॥ ५९ ॥

अवतारं हरेर्योऽयं कीर्तयेद् अन्वहं नरः ।

संकल्पास्तस्य सिध्यन्ति स याति परमां गतिम् ॥ ६० ॥

प्रलयपयसि धातुः सुप्तशक्तेर्मुखेभ्यः

श्रुतिगणमपनीतं प्रत्युपादत्त हत्वा ।

दितिजमकथयद् यो ब्रह्म सत्यव्रतानां

तमहमखिलहेतुं जिह्ममीनं नतोऽस्मि ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

अष्टमस्कन्धे मत्यावतारचरितानुवर्णनं तुर्विंशोऽध्यायः ॥ २४ ॥

हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

सूर्यवंशवर्णनं, वैवस्वतमनोः पुत्रस्य स्त्रीभावापत्तिश्च -

श्रीराजोवाच ।
मन्वन्तराणि सर्वाणि त्वयोक्तानि श्रुतानि मे ।
वीर्याणि अनन्तवीर्यस्य हरेस्तत्र कृतानि च ॥ १ ॥
योऽसौ सत्यव्रतो नाम राजर्षिः द्रविडेश्वरः ।
ज्ञानं योऽतीतकल्पान्ते लेभे पुरुषसेवया ॥ २ ॥
स वै विवस्वतः पुत्रो मनुः आसीद् इति श्रुतम् ।
त्वत्तस्तस्य सुताः प्रोक्ता इक्ष्वाकुप्रमुखा नृपाः ॥ ३ ॥
तेषां वंशं पृथग्ब्रह्मन् वंशानुचरितानि च ।
कीर्तयस्व महाभाग नित्यं शुश्रूषतां हि नः ॥ ४ ॥
ये भूता ये भविष्याश्च भवन्ति अद्यतनाश्च ये ।
तेषां नः पुण्यकीर्तीनां सर्वेषां वद विक्रमान् ॥ ५ ॥
श्रीसूत उवाच ।
एवं परीक्षिता राज्ञा सदसि ब्रह्मवादिनाम् ।
पृष्टः प्रोवाच भगवान् शुकः परमधर्मवित् ॥ ६ ॥
श्रीशुक उवाच ।
श्रूयतां मानवो वंशः प्राचुर्येण परंतप ।
न शक्यते विस्तरतो वक्तुं वर्षशतैरपि ॥ ७ ॥
परावरेषां भूतानां आत्मा यः पुरुषः परः ।
स एवासीद् इदं विश्वं कल्पान्ते अन्यत् न किञ्चन ॥ ८ ॥
तस्य नाभेः समभवत् पद्मकोषो हिरण्मयः ।
तस्मिन् जज्ञे महाराज स्वयंभूः चतुराननः ॥ ९ ॥
मरीचिः मनसस्तस्य जज्ञे तस्यापि कश्यपः ।
दाक्षायण्यां ततोऽदित्यां विवस्वान् अभवत् सुतः ॥ १० ॥
ततो मनुः श्राद्धदेवः संज्ञायामास भारत ।
श्रद्धायां जनयामास दश पुत्रान् स आत्मवान् ॥ ११ ॥
इक्ष्वाकुनृगशर्याति दिष्टधृष्ट करूषकान् ।
नरिष्यन्तं पृषध्रं च नभगं च कविं विभुः ॥ १२ ॥
अप्रजस्य मनोः पूर्वं वसिष्ठो भगवान् किल ।
मित्रावरुणयोः इष्टिं प्रजार्थं अकरोद् विभुः ॥ १३ ॥
तत्र श्रद्धा मनोः पत्नी होतारं समयाचत ।
दुहित्रर्थं उपागम्य प्रणिपत्य पयोव्रता ॥ १४ ॥

प्रेषितोऽध्वर्युणा होता ध्यायन् तत् सुसमाहितः ।
हविषि व्यचरत् तेन वषट्कारं गृणन् द्विजः ॥ १५ ॥
होतुस्तद् व्यभिचारेण कन्येला नाम साभवत् ।
तां विलोक्य मनुः प्राह नाति हृष्टमना गुरुम् ॥ १६ ॥
भगवन् किमिदं जातं कर्म वो ब्रह्मवादिनाम् ।
विपर्ययं अहो कष्टं मैवं स्याद् ब्रह्मविक्रिया ॥ १७ ॥
यूयं मंत्रविदो युक्ताः तपसा दग्धकिल्बिषाः ।
कुतः संकल्पवैषम्यं अनृतं विबुधेष्विव ॥ १८ ॥
निशम्य तद्वचः तस्य भगवान् प्रपितामहः ।
होतुर्व्यतिक्रमं ज्ञात्वा बभाषे रविनन्दनम् ॥ १९ ॥
एतत् संकल्पवैषम्यं होतुस्ते व्यभिचारतः ।
तथापि साधयिष्ये ते सुप्रजास्त्वं स्वतेजसा ॥ २० ॥
एवं व्यवसितो राजन् भगवान् स महायशाः ।
अस्तौषीद् आदिपुरुषं इलायाः पुंस्त्वकाम्यया ॥ २१ ॥
तस्मै कामवरं तुष्टो भगवान् हरिरीश्वरः ।
ददौ इविलाभवत् तेन सुद्युम्नः पुरुषर्षभः ॥ २२ ॥
स एकदा महाराज विचरन् मृगयां वने ।
वृतः कतिपयामात्यैः अश्वं आरुह्य सैन्धवम् ॥ २३ ॥
प्रगृह्य रुचिरं चापं शरांश्च परमाद्भुतान् ।
दंशितोऽनुमृगं वीरो जगाम दिशमुत्तराम् ॥ २४ ॥
सु कुमातो वनं मेरोः अधस्तात् प्रविवेश ह ।
यत्रास्ते भगवान् शर्वो रममाणः सहोमया ॥ २५ ॥
तस्मिन् प्रविष्ट एवासौ सुद्युम्नः परवीरहा ।
अपश्यत् स्त्रियमात्मानं अश्वं च वडवां नृप ॥ २६ ॥
तथा तदनुगाः सर्वे आत्मलिङ्ग विपर्ययम् ।
दृष्ट्वा विमनसोऽभूवन् विक्षमाणाः परस्परम् ॥ २७ ॥
श्रीराजोवाच ।
कथं एवं गुणो देशः केन वा भगवन् कृतः ।
प्रश्नमेनं समाचक्ष्व परं कौतूहलं हि नः ॥ २८ ॥
श्रीशुक उवाच ।
एकदा गिरिशं द्रष्टुं ऋषयस्तत्र सुव्रताः ।
दिशो वितिमिराभासाः कुर्वन्तः समुपागमन् ॥ २९ ॥
तान् विलोक्य अंबिका देवी विवासा व्रीडिता भृशम् ।

भर्तुरङ्गात समुत्थाय नीवीमाश्वथ पर्यधात् ॥ ३० ॥
ऋषयोऽपि तयोर्वीक्ष्य प्रसङ्गं रममाणयोः ।
निवृत्ताः प्रययुस्तस्मात् नरनारायणाश्रमम् ॥ ३१ ॥
तदिदं भगवान् आह प्रियायाः प्रियकाम्यया ।
स्थानं यः प्रविशेदेतत् स वै योषिद् भवेदिति ॥ ३२ ॥
तत ऊर्ध्वं वनं तद्वै पुरुषा वर्जयन्ति हि ।
सा चानुचरसंयुक्ता विचचार वनाद् वनम् ॥ ३३ ॥
अथ तां आश्रमाभ्याशे चरन्तीं प्रमदोत्तमाम् ।
स्त्रीभिः परिवृतां वीक्ष्य चकमे भगवान् बुधः ॥ ३४ ॥
सापि तं चकमे सुभ्रूः सोमराजसुतं पतिम् ।
स तस्यां जनयामास पुरूरवसमात्मजम् ॥ ३५ ॥
एवं स्त्रीत्वं अनुप्राप्तः सुद्युम्नो मानवो नृपः ।
सस्मार स कुलाचार्यं वसिष्ठमिति शुश्रुम ॥ ३६ ॥
स तस्य तां दशां दृष्ट्वा कृपया भृशपीडितः ।
सुद्युम्नस्याशयन् पुंस्त्वं उपाधावत शंकरम् ॥ ३७ ॥
तुष्टस्तस्मै स भगवान् ऋषये प्रियमावहन् ।
स्वां च वाचं ऋतां कुर्वन् इदमाह विशाम्पते ॥ ३८ ॥
मासं पुमान् स भविता मासं स्त्री तव गोत्रजः ।
इत्थं व्यवस्थया कामं सुद्युम्नोऽवतु मेदिनीम् ॥ ३९ ॥
आचार्यानुग्रहात् कामं लब्ध्वा पुंस्त्वं व्यवस्थया ।
पालयामास जगतीं नाभ्यनन्दन् स्म तं प्रजाः ॥ ४० ॥
तस्योत्कलो गयो राजन् विमलश्च सुतास्त्रयः ।
दक्षिणापथराजानो बभूवुः धर्मवत्सलाः ॥ ४१ ॥
ततः परिणते काले प्रतिष्ठानपतिः प्रभुः ।
पुरूरवस उत्सृज्य गां पुत्राय गतो वनम् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां नवमस्कन्धे प्रथमोध्याऽयः ॥ १ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

पृषध्र कवि करूष धृष्ट नृग नरिष्यंतादिष्टानां वंशविस्तारः

श्रीशुक उवाच ।
एवं गतेऽथ सुद्युम्ने मनुर्वैवस्वतः सुते ।
पुत्रकामः तपस्तेपे यमुनायां शतं समाः ॥ १ ॥
ततोऽयजन् मनुर्देवं अपत्यार्थं हरिं प्रभुम् ।
इक्ष्वाकु पूर्वजान् पुत्रान् लेभे स्वसदृशान् दश ॥ २ ॥
पृषध्रस्तु मनोः पुत्रो गोपालो गुरुणा कृतः ।
पालयामास गा यत्तो रात्र्यां वीरासनव्रतः ॥ ३ ॥
एकदा प्राविशद् गोष्ठं शार्दूलो निशि वर्षति ।
शयाना गाव उत्थाय भीतास्ता बभ्रमुर्व्रजे ॥ ४ ॥
एकां जग्राह बलवान् सा चुक्रोश भयातुरा ।
तस्यास्तु क्रन्दितं श्रुत्वा पृषध्रोऽनुससार ह ॥ ५ ॥
खड्गमादाय तरसा प्रलीनोडुगणे निशि ।
अजानन् अहनद् बभ्रोः शिरः शार्दूलशङ्कया ॥ ६ ॥
व्याघ्रोऽपि वृक्णश्रवणो निस्त्रिंशाग्राहतस्ततः ।
निश्चक्राम भृशं भीतो रक्तं पथि समुत्सृजन् ॥ ७ ॥
मन्यमानो हतं व्याघ्रं पृषध्रः परवीरहा ।
अद्राक्षीत् स्वहतां बभ्रुं व्युष्टायां निशि दुःखितः ॥ ८ ॥
तं शशाप कुलाचार्यः कृतागसं अकामतः ।
न क्षत्रबन्धुः शूद्रस्त्वं कर्मणा भवितामुना ॥ ९ ॥
एवं शप्तस्तु गुरुणा प्रत्यगृह्णात् कृताञ्जलिः ।
अधारयद् व्रतं वीर ऊर्ध्वरेता मुनिप्रियम् ॥ १० ॥
वासुदेवे भगवति सर्वात्मनि परेऽमले ।
एकान्तित्वं गतो भक्त्या सर्वभूतसुहृत् समः ॥ ११ ॥
विमुक्तसंगः शान्तात्मा संयताक्षोऽपरिग्रहः ।
यदृच्छयोपपन्नेन कल्पयन् वृत्तिमात्मनः ॥ १२ ॥
आत्मनि आत्मानमाधाय ज्ञानतृप्तः समाहितः ।
विचचार महीमेतां जडान्ध-बधिराकृतिः ॥ १३ ॥
एवं वृत्तो वनं गत्वा दृष्ट्वा दावाग्निमुत्थितम् ।
तेनोपयुक्तकरणो ब्रह्म प्राप परं मुनिः ॥ १४ ॥
कविः कनीयान् विषयेषु निःस्पृहो
विसृज्य राज्यं सह बन्धुभिर्वनम् ।

निवेश्य चित्ते पुरुषं स्वरोचिषं
    विवेश कैशोरवयाः परं गतः ॥ १५ ॥
करूषान् मानवाद् आसन् कारूषाः क्षत्रजातयः ।
उत्तरापथगोप्तारो ब्रह्मण्या धर्मवत्सलाः ॥ १६ ॥
धृष्टाद् धार्ष्टमभूत् क्षत्रं ब्रह्मभूयं गतं क्षितौ ।
नृगस्य वंशः सुमतिः भूतज्योतिः ततो वसुः ॥ १७ ॥
वसोः प्रतीकस्तत्पुत्र ओघवान् ओघवत्पिता ।
कन्या चौघवती नाम सुदर्शन उवाह ताम् ॥ १८ ॥
चित्रसेनो नरिष्यन्ताद् ऋक्षस्तस्य सुतोऽभवत् ।
तस्य मीढ्वांस्ततः पूर्ण इन्द्रसेनस्तु तत्सुतः ॥ १९ ॥
वीतिहोत्रस्तु इन्द्रसेनात् तस्य सत्यश्रवा अभूत् ।
उरुश्रवाः सुतस्तस्य देवदत्तस्ततोऽभवत् ॥ २० ॥
ततोऽग्निवेश्यो भगवान् अग्निः स्वयं अभूत्सुतः ।
कानीन इति विख्यातो जातूकर्ण्यो महान् ऋषिः ॥ २१ ॥
ततो ब्रह्मकुलं जातं आग्निवेश्यायनं नृप ।
नरिष्यन्तान्वयः प्रोक्तो दिष्टवंशमतः शृणु ॥ २२ ॥
नाभागो दिष्टपुत्रोऽन्यः कर्मणा वैश्यतां गतः ।
भलन्दनः सुतस्तस्य वत्सप्रीतिः भलन्दनात् ॥ २३ ॥
वत्सप्रीतेः सुतः प्रांशुः तत्सुतं प्रमतिं विदुः ।
खनित्रः प्रमतेः तस्मात् चाक्षुषोऽथ विविंशतिः ॥ २४ ॥
विविंशतेः सुतो रंभः खनीनेत्रोऽस्य धार्मिकः ।
करन्धमो महाराज तस्यासीद् आत्मजो नृप ॥ २५ ॥
तस्य आवीक्षित् सुतो यस्य मरुत्तः चक्रवर्ति अभूत् ।
संवर्तोऽयाजयद् यं वै महायोग्यङ्गिरःसुतः ॥ २६ ॥
मरुत्तस्य यथा यज्ञो न तथान्योऽस्ति कश्चन ।
सर्वं हिरण्मयं त्वासीत् यत्किञ्चिच्चास्य शोभनम् ॥ २७ ॥
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
मरुतः परिवेष्टारो विश्वेदेवाः सभासदः ॥ २८ ॥
मरुत्तस्य दमः पुत्रः तस्यासीद् राज्यवर्धनः ।
सुधृतिस्तत्सुतो जज्ञे सौधृतेयो नरः सुतः ॥ २९ ॥
तत्सुतः केवलः तस्माद् बन्धुमान् वेगवान् ततः ।
बुधस्तस्याभवद् यस्य तृणबिन्दुर्महीपतिः ॥ ३० ॥
तं भेजेऽलम्बुषा देवी भजनीयगुणालयम् ।

वराप्सरा यतः पुत्राः कन्या च इडविडाभवत् ॥ ३१ ॥
यस्यां उत्पादयामास विश्रवा धनदं सुतम् ।
प्रादाय विद्यां परमां ऋषिर्योगेश्वरः पितुः ॥ ३२ ॥
विशालः शून्यबन्धुश्च धूम्रकेतुश्च तत्सुताः ।
विशालो वंशकृद् राजा वैशालीं निर्ममे पुरीम् ॥ ३३ ॥
हेमचन्द्रः सुतस्तस्य धूम्राक्षः तस्य चात्मजः ।
तत्पुत्रात् संयमादासीत् कृशाश्वः सहदेवजः ॥ ३४ ॥
कृशाश्वात् सोमदत्तोऽभूद् योऽश्वमेधैः इडस्पतिम् ।
इष्ट्वा पुरुषमापाग्र्यां गतिं योगेश्वराश्रिताम् ॥ ३५ ॥
सौमदत्तिस्तु सुमतिः तत्सुतो जनमेजयः ।
एते वैशालभूपालाः तृणबिन्दोर्यशोधराः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां नवमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

शर्यातिवंशः, सुकन्याख्यानं रेवतकन्याख्यानं च -

श्रीशुक उवाच ।
शर्यातिर्मानवो राजा ब्रह्मिष्ठः संबभूव ह ।
यो वा अंगिरसां सत्रे द्वितीयं अह ऊचिवान् ॥ १ ॥
सुकन्या नाम तस्यासीत् कन्या कमललोचना ।
तया सार्धं वनगतो हि अगमत् व्यवनाश्रमम् ॥ २ ॥
सा सखीभिः परिवृता विचिन्वन्त्यंघ्रिपान् वने ।
वल्मीकरन्ध्रे ददृशे खद्योते इव ज्योतिषी ॥ ३ ॥
ते दैवचोदिता बाला ज्योतिषी कण्टकेन वै ।
अविध्यन् मुग्धभावेन सुस्रावासृक् ततो बहिः ॥ ४ ॥
शकृत् मूत्रनिरोधोऽभूत् सैनिकानां च तत्क्षणात् ।
राजर्षिः तं उपालक्ष्य पुरुषान् विस्मितोऽब्रवीत् ॥ ५ ॥
अप्यभद्रं न युष्माभिः भार्गवस्य विचेष्टितम् ।
व्यक्तं केनापि नस्तस्य कृतं आश्रमदूषणम् ॥ ६ ॥
सुकन्या प्राह पितरं भीता किञ्चित् कृतं मया ।
द्वे ज्योतिषी अजानन्त्या निर्भिन्ने कण्टकेन वै ॥ ७ ॥
दुहितुस्तद् वचः श्रुत्वा शर्यातिर्जातसाध्वसः ।
मुनिं प्रसादयामास वल्मीकान्तर्हितं शनैः ॥ ८ ॥
तद् अभिप्रायमाज्ञाय प्रादाद् दुहितरं मुनेः ।
कृच्छ्रात् मुक्तः तमामंत्र्य पुरं प्रायात् समाहितः ॥ ९ ॥
सुकन्या च्यवनं प्राप्य पतिं परमकोपनम् ।
प्रीणयामास चित्तज्ञा अप्रमत्तानुवृत्तिभिः ॥ १० ॥
कस्यचित् त्वथ कालस्य नासत्यावाश्रमागतौ ।
तौ पूजयित्वा प्रोवाच वयो मे दत्तमीश्वरौ ॥ ११ ॥
ग्रहं ग्रहीष्ये सोमस्य यज्ञे वामप्यसोमपोः ।
क्रियतां मे वयो रूपं प्रमदानां यदीप्सितम् ॥ १२ ॥
बाढं इति ऊचतुर्विप्रं अभिनन्द्य भिषक्तमौ ।
निमज्जतां भवान् अस्मिन् ह्रदे सिद्धविनिर्मिते ॥ १३ ॥
इत्युक्त्वा जरया ग्रस्त देहो धमनिसन्ततः ।
ह्रदं प्रवेशितोऽश्विभ्यां वलीपलित विप्रियः ॥ १४ ॥
पुरुषास्त्रय उत्तस्थुः अपीव्या वनिताप्रियाः ।
पद्मस्रजः कुण्डलिनः तुल्यरूपाः सुवाससः ॥ १५ ॥

तान् निरीक्ष्य वरारोहा सरूपान् सूर्यवर्चसः ।
अजानती पतिं साध्वी अश्विनौ शरणं ययौ ॥ १६ ॥
दर्शयित्वा पतिं तस्यै पातिव्रत्येन तोषितौ ।
ऋषिमामन्त्र्य ययतुः विमानेन त्रिविष्टपम् ॥ १७ ॥
यक्ष्यमाणोऽथ शर्यातिः च्यवनस्याश्रमं गतः ।
ददर्श दुहितुः पार्श्वे पुरुषं सूर्यवर्चसम् ॥ १८ ॥
राजा दुहितरं प्राह कृतपादाभिवन्दनाम् ।
आशिषश्चाप्रयुञ्जानो नातिप्रीतिमना इव ॥ १९ ॥
चिकीर्षितं ते किमिदं पतिस्त्वया
प्रलम्भितो लोकनमस्कृतो मुनिः ।
यत्त्वं जराग्रस्तमसत्यसम्मतं
विहाय जारं भजसेऽमुमध्वगम् ॥ २० ॥
कथं मतिस्तेऽवगतान्यथा सतां
कुलप्रसूते कुलदूषणं त्विदम् ।
बिभर्षि जारं यदपत्रपा कुलं
पितुश्च भर्तुश्च नयस्यधस्तमः ॥ २१ ॥
एवं ब्रुवाणं पितरं स्मयमाना शुचिस्मिता ।
उवाच तात जामाता तवैष भृगुनन्दनः ॥ २२ ॥
शशंस पित्रे तत् सर्वं वयोरूपाभिलम्भनम् ।
विस्मितः परमप्रीतः तनयां परिषस्वजे ॥ २३ ॥
सोमेन याजयन् वीरं ग्रहं सोमस्य चाग्रहीत् ।
असोमपोः अपि अश्विनोः च्यवनः स्वेन तेजसा ॥ २४ ॥
हन्तुं तमाददे वज्रं सद्यो मन्युरमर्षितः ।
सवज्रं स्तम्भयामास भुजं इन्द्रस्य भार्गवः ॥ २५ ॥
अन्वजानन् ततः सर्वे ग्रहं सोमस्य चाश्विनोः ।
भिषजाविति यत् पूर्वं सोमाहुत्या बहिष्कृतौ ॥ २६ ॥
उत्तानबर्हिरानर्तो भूरिषेण इति त्रयः ।
शर्यातेरभवन् पुत्रा आनर्ताद् रेवतोऽभवत् ॥ २७ ॥
सोऽन्तःसमुद्रे नगरीं विनिर्माय कुशस्थलीम् ।
आस्थितोऽभुङ्क्त विषयान् आनर्तादीन् अरिन्दम ॥ २८ ॥
तस्य पुत्रशतं जज्ञे ककुद्मि ज्येष्ठमुत्तमम् ।
ककुद्मी रेवतीं कन्यां स्वां आदाय विभुं गतः ॥ २९ ॥
पुत्र्या वरं परिप्रष्टुं ब्रह्मलोकं अपावृतम् ।

आवर्तमाने गान्धर्वे स्थितोऽलब्धक्षणः क्षणम् ॥ ३० ॥
तदन्त आद्यमानम्य स्वाभिप्रायं न्यवेदयत् ।
तत् श्रुत्वा भगवान् ब्रह्मा प्रहस्य तमुवाच ह ॥ ३१ ॥
अहो राजन् निरुद्धास्ते कालेन हृदि ये कृताः ।
तत्पुत्रपौत्र नप्तॄणां गोत्राणि च न श्रृण्महे ॥ ३२ ॥
कालोऽभियातस्त्रिणव चतुर्युगविकल्पितः ।
तद्गच्छ देवदेवांशो बलदेवो महाबलः ॥ ३३ ॥
कन्यारत्नमिदं राजन् नररत्नाय देहि भोः ।
भुवो भारावताराय भगवान् भूतभावनः ॥ ३४ ॥
अवतीर्णो निजांशेन पुण्यश्रवणकीर्तनः ।
इत्यादिष्टोऽभिवन्द्याजं नृपः स्वपुरमागतः ।
त्यक्तं पुण्यजनत्रासाद्भ्रातृभिर्दिक्ष्ववस्थितैः ॥ ३५ ॥
सुतां दत्त्वानवद्याङ्गीं बलाय बलशालिने ।
बदर्याख्यं गतो राजा तप्तुं नारायणाश्रमम् ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां नवमस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

नभगवंशवर्णनं नाभागचरितम्, अंबरीषोपाख्यानं दुर्वासः पलायनं च -

श्रीशुक उवाच ।
नाभागो नभगापत्यं यं ततं भ्रातरः कविम् ।
यविष्ठं व्यभजन् दायं ब्रह्मचारिणमागतम् ॥ १ ॥
भ्रातरोऽभाङ्क्त किं मह्यं भजाम पितरं तव ।
त्वां ममार्यास्तताभाङ्क्षुः मा पुत्रक तदादृथाः ॥ २ ॥
इमे अंगिरसः सत्रं आसतेऽद्य सुमेधसः ।
षष्ठं षष्ठं उपेत्याहः कवे मुह्यन्ति कर्मणि ॥ ३ ॥
तांन् त्वं शंसय सूक्ते द्वे वैश्वदेवे महात्मनः ।
ते स्वर्यन्तो धनं सत्र परिशेषितमात्मनः ॥ ४ ॥
दास्यन्ति तेऽथ तान् गच्छ तथा स कृतवान् यथा ।
तस्मै दत्त्वा ययुः स्वर्गं ते सत्रपरिशेषणम् ॥ ५ ॥
तं कश्चित् स्वीकरिष्यन्तं पुरुषः कृष्णदर्शनः ।
उवाचोत्तरतोऽभ्येत्य ममेदं वास्तुकं वसु ॥ ६ ॥
ममेदं ऋषिभिः दत्तं इति तर्हि स्म मानवः ।
स्यान्नौ ते पितरि प्रश्नः पृष्टवान् पितरं यथा ॥ ७ ॥
यज्ञवास्तुगतं सर्वं उच्छिष्टं ऋषयः क्वचित् ।
चक्रुर्विभागं रुद्राय स देवः सर्वमर्हति ॥ ८ ॥
नाभागस्तं प्रणम्याह तवेश किल वास्तुकम् ।
इत्याह मे पिता ब्रह्मन् शिरसा त्वां प्रसादये ॥ ९ ॥
यत् ते पितावदद् धर्मं त्वं च सत्यं प्रभाषसे ।
ददामि ते मन्त्रदृशे ज्ञानं ब्रह्म सनातनम् ॥ १० ॥
गृहाण द्रविणं दत्तं मत्सत्रे परिशेषितम् ।
इत्युक्त्वान्तर्हितो रुद्रो भगवान् सत्यवत्सलः ॥ ११ ॥
य एतत् संस्मरेत् प्रातः सायं च सुसमाहितः ।
कविर्भवति मंत्रज्ञो गतिं चैव तथाऽऽत्मनः ॥ १२ ॥
नाभागाद् अंबरीषोऽभूत् महाभागवतः कृती ।
नास्पृशद् ब्रह्मशापोऽपि यं न प्रतिहतः क्वचित् ॥ १३ ॥
श्रीराजोवाच ।
भगवन् श्रोतुमिच्छामि राजर्षेः तस्य धीमतः ।
न प्राभूद् यत्र निर्मुक्तो ब्रह्मदण्डो दुरत्ययः ॥ १४ ॥
श्रीशुक उवाच ।

अंबरीषो महाभागः सप्तद्वीपवतीं महीम् ।
अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि ॥ १५ ॥*
मेनेऽतिदुर्लभं पुंसां सर्वं तत् स्वप्नसंस्तुतम् ।
विद्वान् विभवनिर्वाणं तमो विशति यत् पुमान् ॥ १६ ॥
वासुदेवे भगवति तद्भक्तेषु च साधुषु ।
प्राप्तो भावं परं विश्वं येनेदं लोष्टवत् स्मृतम् ॥ १७ ॥
स वै मनः कृष्णपदारविन्दयोः
   वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्जनादिषु
   श्रुतिं चकाराच्युतसत्कथोदये ॥ १८ ॥
मुकुन्दलिंगालयदर्शने दृशौ
   तद्भृत्यगात्रस्पर्शेऽङ्गसंगमम् ।
घ्राणं च तत्पादसरोजसौरभे
   श्रीमत् तुलस्या रसनां तदर्पिते ॥ १९ ॥
पादौ हरेः क्षेत्रपदानुसर्पणे
   शिरो हृषीकेश पदाभिवन्दने ।
कामं च दास्ये न तु कामकाम्यया
   यथोत्तमश्लोक जनाश्रया रतिः ॥ २० ॥
एवं सदा कर्मकलापमात्मनः
   परेऽधियज्ञे भगवत्यधोक्षजे ।
सर्वात्मभावं विदधन्महीमिमां
   तन्निष्ठविप्राभिहितः शशास ह ॥ २१ ॥
ईजेऽश्वमेधैरधियज्ञमीश्वरं
   महाविभूत्योपचितांगदक्षिणैः ।
ततैर्वसिष्ठासितगौतमादिभिः
   धन्वन्यभिस्रोतमसौ सरस्वतीम् ॥ २२ ॥
यस्य क्रतुषु गीर्वाणैः सदस्या ऋत्विजो जनाः ।
तुल्यरूपाः चानिमिषा व्यदृश्यन्त सुवाससः ॥ २३ ॥
स्वर्गो न प्रार्थितो यस्य मनुजैः अमरप्रियः ।
श्रृण्वद्भिः उपगायद्भिः उत्तमश्लोकचेष्टितम् ॥ २४ ॥
समर्द्धयन्ति तान् कामाः स्वाराज्यपरिभाविताः ।
दुर्लभा नापि सिद्धानां मुकुन्दं हृदि पश्यतः ॥ २५ ॥
स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिवः ।

स्वधर्मेण हरिं प्रीणन् संगान् सर्वान् शनैर्जहौ ॥ २६ ॥
गृहेषु दारेषु सुतेषु बन्धुषु
  द्विपोत्तमस्यन्दन वाजिवस्तुषु ।
अक्षय्यरत्नाभरणाम्बरादिषु
  अनन्तकोशेषु अकरोत् असन् मतिम् ॥ २७ ॥
तस्मा अदाद् हरिश्चक्रं प्रत्यनीक-भयावहम् ।
एकान्तभक्तिभावेन प्रीतो भृत्याभिरक्षणम् ॥ २८ ॥
आरिराधयिषुः कृष्णं महिष्या तुल्यशीलया ।
युक्तः सांवत्सरं वीरो दधार द्वादशीव्रतम् ॥ २९ ॥
व्रतान्ते कार्तिके मासि त्रिरात्रं समुपोषितः ।
स्नातः कदाचित् कालिन्द्यां हरिं मधुवनेऽर्चयत् ॥ ३० ॥
महाभिषेकविधिना सर्वोपस्करसम्पदा ।
अभिषिच्याम्बराकल्पैः गन्धमाल्यार्हणादिभिः ॥ ३१ ॥
तद्गतान्तरभावेन पूजयामास केशवम् ।
ब्राह्मणांश्च महाभागान् सिद्धार्थानपि भक्तितः ॥ ३२ ॥
गवां रुक्मविषाणीनां रूप्याङ्घ्रीणां सुवाससाम् ।
पयःशीलवयोरूप वत्सोपस्करसंपदाम् ॥ ३३ ॥
प्राहिणोत् साधुविप्रेभ्यो गृहेषु न्यर्बुदानि षट् ।
भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तमम् ॥ ३४ ॥
लब्धकामैः अनुज्ञातः पारणायोपचक्रमे ।
तस्य तर्ह्यतिथिः साक्षात् दुर्वासा भगवानभूत् ॥ ३५ ॥
तं आनर्चातिथिं भूपः प्रत्युत्थान् आसनार्हणैः ।
ययाचेऽभ्यवहाराय पादमूलमुपागतः ॥ ३६ ॥
प्रतिनन्द्य स तां याच्ञां कर्तुमावश्यकं गतः ।
निममज्ज बृहद् ध्यायन् कालिन्दीसलिले शुभे ॥ ३७ ॥
मुहूर्तार्धावशिष्टायां द्वादश्यां पारणं प्रति ।
चिन्तयामास धर्मज्ञो द्विजैः तद् धर्मसंकटे ॥ ३८ ॥
ब्राह्मणातिक्रमे दोषो द्वादश्यां यदपारणे ।
यत्कृत्वा साधु मे भूयाद् अधर्मो वा न मां स्पृशेत् ॥ ३९ ॥
अम्भसा केवलेनाथ करिष्ये व्रतपारणम् ।
आहुरब्भक्षणं विप्रा हि अशितं नाशितं च तत् ॥ ४० ॥
इत्यपः प्राश्य राजर्षिः चिन्तयन् मनसाच्युतम् ।
प्रत्यचष्ट कुरुश्रेष्ठ द्विज आगमनमेव सः ॥ ४१ ॥

दुर्वासा यमुनाकूलात् कृत आवश्यक आगतः ।
राज्ञाभिनन्दितस्तस्य बुबुधे चेष्टितं धिया ॥ ४२ ॥
मन्युना प्रचलद्गात्रो भ्रुकुटीकुटिलाननः ।
बुभुक्षितश्च सुतरां कृताञ्जलिमभाषत ॥ ४३ ॥
अहो अस्य नृशंसस्य श्रियोन्मत्तस्य पश्यत ।
धर्मव्यतिक्रमं विष्णोः अभक्तस्य ईशमानिनः ॥ ४४ ॥
यो मां अतिथिं आयातं आतिथ्येन निमंत्र्य च ।
अदत्त्वा भुक्तवान् तस्य सद्यस्ते दर्शये फलम् ॥ ४५ ॥
एवं ब्रुवाण उत्कृत्य जटां रोषप्रदीपितः ।
तया स निर्ममे तस्मै कृत्यां कालानलोपमाम् ॥ ४६ ॥
तां आपतन्तीं ज्वलतीं असिहस्तां पदा भुवम् ।
वेपयन्तीं समुद्वीक्ष्य न चचाल पदान्नृपः ॥ ४७ ॥
प्राग् दिष्टं भृत्यरक्षायां पुरुषेण महात्मना ।
ददाह कृत्यां तां चक्रं क्रुद्धाहिमिव पावकः ॥ ४८ ॥
तद् अभिद्रवद् उद्वीक्ष्य स्वप्रयासं च निष्फलम् ।
दुर्वासा दुद्रुवे भीतो दिक्षु प्राणपरीप्सया ॥ ४९ ॥
तमन्वधावद्भगवद्रथांगं
   दावाग्निः उद्धूतशिखो यथाहिम् ।
तथानुषक्तं मुनिरीक्षमाणो
   गुहां विविक्षुः प्रससार मेरोः ॥ ५० ॥
दिशो नभः क्ष्मां विवरान् समुद्रान्
   लोकान् सपालान् त्रिदिवं गतः सः ।
यतो यतो धावति तत्र तत्र
   सुदर्शनं दुष्प्रसहं ददर्श ॥ ५१ ॥
अलब्धनाथः स सदा कुतश्चित्
   संत्रस्तचित्तोऽरणमेषमाणः ।
देवं विरिञ्चं समगाद्विधातः
   त्राह्यात्मयोनेऽजिततेजसो माम् ॥ ५२ ॥
श्रीब्रह्मोवाच ।
स्थानं मदीयं सहविश्वमेतत्
   क्रीडावसाने द्विपरार्धसंज्ञे ।
भ्रूभंगमात्रेण हि संदिधक्षोः
   कालात्मनो यस्य तिरोभविष्यति ॥ ५३ ॥

अहं भवो दक्षभृगुप्रधानाः
   प्रजेशभूतेश सुरेशमुख्याः ।
सर्वे वयं यत् नियमं प्रपन्ना
   मूर्ध्न्यर्पितं लोकहितं वहामः ॥ ५४ ॥
प्रत्याख्यातो विरिञ्चेन विष्णुचक्रोपतापितः ।
दुर्वासाः शरणं यातः शर्वं कैलासवासिनम् ॥ ५५ ॥
श्रीरुद्र उवाच ।
वयं न तात प्रभवाम भूम्नि
   यस्मिन् परेऽन्येऽप्यजजीवकोशाः ।
भवन्ति काले न भवन्ति हीदृशाः
   सहस्रशो यत्र वयं भ्रमामः ॥ ५६ ॥
अहं सनत्कुमारश्च नारदो भगवानजः ।
कपिलो अपान्तरतमो देवलो धर्म आसुरिः ॥ ५७ ॥
मरीचिप्रमुखाश्चान्ये सिद्धेशाः पारदर्शनाः ।
विदाम न वयं सर्वे यन्मायां माययाऽऽवृताः ॥ ५८ ॥
तस्य विश्वेश्वरस्येदं शस्त्रं दुर्विषहं हि नः ।
तमेवं शरणं याहि हरिस्ते शं विधास्यति ॥ ५९ ॥
ततो निराशो दुर्वासाः पदं भगवतो ययौ ।
वैकुण्ठाख्यं यदध्यास्ते श्रीनिवासः श्रिया सह ॥ ६० ॥
सन्दह्यमानोऽजितशस्त्रवह्निना
   तत्पादमूले पतितः सवेपथुः ।
आहाच्युतानन्त सदीप्सित प्रभो
   कृतागसं माव हि विश्वभावन ॥ ६१ ॥
अजानता ते परमानुभावं
   कृतं मयाघं भवतः प्रियाणाम् ।
विधेहि तस्यापचितिं विधातः
   मुच्येत यन्नाम्न्युदिते नारकोऽपि ॥ ६२ ॥
श्रीभगवानुवाच ।
अहं भक्तपराधीनो हि अस्वतंत्र इव द्विज ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ ६३ ॥
नाहं आत्मानमाशासे मद्भक्तैः साधुभिर्विना ।
श्रियं चात्यन्तिकीं ब्रह्मन् येषां गतिः अहं परा ॥ ६४ ॥
ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् ।

हित्वा मां शरणं याताः कथं तान् त्यक्तुमुत्सहे ॥ ६५ ॥
मयि निर्बद्धहृदयाः साधवः समदर्शनाः ।
वशीकुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥ ६६ ॥
मत्सेवया प्रतीतं च सालोक्यादि चतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविद्रुतम् ॥ ६७ ॥
साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ।
मदन्यत् ते न जानन्ति नाहं तेभ्यो मनागपि ॥ ६८ ॥
उपायं कथयिष्यामि तव विप्र श्रृणुष्व तत् ।
अयं ह्यात्माभिचारस्ते यतस्तं याहि मा चिरम् ।
साधुषु प्रहितं तेजः प्रहर्तुः कुरुतेऽशिवम् ॥ ६९ ॥
तपो विद्या च विप्राणां निःश्रेयसकरे उभे ।
ते एव दुर्विनीतस्य कल्पेते कर्तुरन्यथा ॥ ७० ॥
ब्रह्मन् तद् गच्छ भद्रं ते नाभागतनयं नृपम् ।
क्षमापय महाभागं ततः शान्तिर्भविष्यति ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां नवमस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

अंबरीषानुग्रहेण दुर्वाससो दुःखनिवृत्तिः, अंबरीशप्रशंसा, तस्य भगवाद्रूपतापत्तीश्च -

श्रीशुक उवाच ।
एवं भगवताऽऽदिष्टो दुर्वासाश्चक्रतापितः ।
अंबरीषं उपावृत्य तत्पादौ दुःखितोऽग्रहीत् ॥ १ ॥
तस्य सोद्यमनं वीक्ष्य पादस्पर्शविलज्जितः ।
अस्तावीत् तत् हरेः अस्त्रं कृपया पीडितो भृशम् ॥ २ ॥
अंबरीष उवाच ।
त्वमग्निर्भगवान् सूर्यः त्वं सोमो ज्योतिषां पतिः ।
त्वं आपस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च ॥ ३ ॥
सुदर्शन नमस्तुभ्यं सहस्राराच्युतप्रिय ।
सर्वास्त्रघातिन् विप्राय स्वस्ति भूया इडस्पते ॥ ४ ॥
त्वं धर्मस्त्वमृतं सत्यं त्वं यज्ञोऽखिलयज्ञभुक् ।
त्वं लोकपालः सर्वात्मा त्वं तेजः पौरुषं परम् ॥ ५ ॥
नमः सुनाभाखिलधर्मसेतवे
ह्यधर्मशीलासुरधूमकेतवे ।
त्रैलोक्यगोपाय विशुद्धवर्चसे
मनोजवायाद्भुतकर्मणे गृणे ॥ ६ ॥
त्वत्तेजसा धर्ममयेन संहृतं
तमः प्रकाशश्च दृशो महात्मनाम् ।
दुरत्ययस्ते महिमा गिरां पते
त्वद् रूपमेतत् सदसत् परावरम् ॥ ७ ॥
यदा विसृष्टस्त्वमनञ्जनेन वै
बलं प्रविष्टोऽजित दैत्यदानवम् ।
बाहूदरोर्वङ्घ्रिशिरोधराणि
वृक्णन् अजस्रं प्रधने विराजसे ॥ ८ ॥
स त्वं जगत्त्राण खलप्रहाणये
निरूपितः सर्वसहो गदाभृता ।
विप्रस्य चास्मत् कुलदैवहेतवे
विधेहि भद्रं तदनुग्रहो हि नः ॥ ९ ॥
यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः ।
कुलं नो विप्रदैवं चेद् द्विजो भवतु विज्वरः ॥ १० ॥
यदि नो भगवान् प्रीत एकः सर्वगुणाश्रयः ।

सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ॥ ११ ॥
श्रीशुक उवाच ।
इति संस्तुवतो राज्ञो विष्णुचक्रं सुदर्शनम् ।
अशाम्यत् सर्वतो विप्रं प्रदहद् राजयाच्ञया ॥ १२ ॥
स मुक्तोऽस्त्राग्नितापेन दुर्वासाः स्वस्तिमान् ततः ।
प्रशशंस तमुर्वीशं युञ्जानः परमाशिषः ॥ १३ ॥
दुर्वासा उवाच ।
अहो अनन्तदासानां महत्त्वं दृष्टमद्य मे ।
कृतागसोऽपि यद् राजन् मंगलानि समीहसे ॥ १४ ॥
दुष्करः को नु साधूनां दुस्त्यजो वा महात्मनाम् ।
यैः संगृहीतो भगवान् सात्वतां ऋषभो हरिः ॥ १५ ॥
यन्नामश्रुतिमात्रेण पुमान् भवति निर्मलः ।
तस्य तीर्थपदः किं वा दासानां अवशिष्यते ॥ १६ ॥
राजन् अनुगृहीतोऽहं त्वयातिकरुणात्मना ।
मद् अघं पृष्ठतः कृत्वा प्राणा यन्मेऽभिरक्षिताः ॥ १७ ॥
राजा तं अकृताहारः प्रत्यागमनकांक्षया ।
चरणौ उवुपसंगृह्य प्रसाद्य समभोजयत् ॥ १८ ॥
सोऽशित्वादृतमानीतं आतिथ्यं सार्वकामिकम् ।
तृप्तात्मा नृपतिं प्राह भुज्यतां इति सादरम् ॥ १९ ॥
प्रीतोऽस्मि अनुगृहीतोऽस्मि तव भागवतस्य वै ।
दर्शनस्पर्शनालापैः आतिथ्येनात्ममेधसा ॥ २० ॥
कर्मावदातं एतत् ते गायन्ति स्वःस्त्रियो मुहुः ।
कीर्तिं परमपुण्यां च कीर्तयिष्यति भूरियम् ॥ २१ ॥
श्रीशुक उवाच ।
एवं संकीर्त्य राजानं दुर्वासाः परितोषितः ।
ययौ विहायसाऽऽमंत्र्य ब्रह्मलोकमहैतुकम् ॥ २२ ॥
संवत्सरोऽत्यगात् तावद् यावता नागतो गतः ।
मुनिस्तद्दर्शनाकांक्षो राजाऽब्भक्षो बभूव ह ॥ २३ ॥
गतेऽथ दुर्वाससि सोऽम्बरीषो
  द्विजोपयोगातिपवित्रमाहरत् ।
ऋषेर्विमोक्षं व्यसनं च बुद्ध्वा
  मेने स्ववीर्यं च परानुभावम् ॥ २४ ॥
एवं विधानेकगुणः स राजा

परात्मनि ब्रह्मणि वासुदेवे ।
क्रियाकलापैः समुवाह भक्तिं
ययाऽऽविरिञ्च्यान् निरयांश्चकार ॥ २५ ॥
श्रीशुक उवाच ।
अथाम्बरीषस्तनयेषु राज्यं
समानशीलेषु विसृज्य धीरः ।
वनं विवेशात्मनि वासुदेवे
मनो दधद् ध्वस्तगुणप्रवाहः ॥ २६ ॥
इत्येतत् पुण्यमाख्यानं अंबरीषस्य भूपतेः ।
संकीर्तयन् अनुध्यायन् भक्तो भगवतो भवेत् ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां नवमस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

इक्ष्वाकुवंशवर्णनं, तत्र मान्धातुश्चरितं, सौभर्युपाख्यानं च -

श्रीशुक उवाच ।
विरूपः केतुमान् शंभुः अंबरीषसुतास्त्रयः ।
विरूपात्पृषदश्वोऽभूत् तत्पुत्रस्तु रथीतरः ॥ १ ॥
रथीतरस्याप्रजस्य भार्यायां तन्तवेऽर्थितः ।
अङ्गिरा जनयामास ब्रह्मवर्चस्विनः सुतान् ॥ २ ॥
एते क्षेत्रप्रसूता वै पुनस्त्वाङ्गिरसाः स्मृताः ।
रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः ॥ ३ ॥
क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः ।
तस्य पुत्रशतज्येष्ठा विकुक्षिनिमिदण्डकाः ॥ ४ ॥
तेषां पुरस्ताद् अभवन् आर्यावर्ते नृपा नृप ।
पञ्चविंशतिः पश्चाच्च त्रयो मध्ये परेऽन्यतः ॥ ५ ॥
स एकदाष्टकाश्राद्धे इक्ष्वाकुः सुतमादिशत् ।
मांसमानीयतां मेध्यं विकुक्षे गच्छ मा चिरम् ॥ ६ ॥
तथेति स वनं गत्वा मृगान् हत्वा क्रियार्हणान् ।
श्रान्तो बुभुक्षितो वीरः शशं चाददपस्मृतिः ॥ ७ ॥
शेषं निवेदयामास पित्रे तेन च तद्‍गुरुः ।
चोदितः प्रोक्षणायाह दुष्टमेतद् अकर्मकम् ॥ ८ ॥
ज्ञात्वा पुत्रस्य तत्कर्म गुरुणाभिहितं नृपः ।
देशान्निःसारयामास सुतं त्यक्तविधिं रुषा ॥ ९ ॥
स तु विप्रेण संवादं जापकेन समाचरन् ।
त्यक्त्वा कलेवरं योगी स तेनावाप यत् परम् ॥ १० ॥
पितर्युपरतेऽभ्येत्य विकुक्षिः पृथिवीमिमाम् ।
शासदीजे हरिं यज्ञैः शशाद इति विश्रुतः ॥ ११ ॥
पुरञ्जयस्तस्य सुत इन्द्रवाह इतीरितः ।
ककुत्स्थ इति चाप्युक्तः शृणु नामानि कर्मभिः ॥ १२ ॥
कृतान्त आसीत् समरो देवानां सह दानवैः ।
पार्ष्णिग्राहो वृतो वीरो देवैर्दैत्यपराजितैः ॥ १३ ॥
वचनाद् देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः ।
वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः ॥ १४ ॥
स सन्नद्धो धनुर्दिव्यं आदाय विशिखाञ्छितान् ।
स्तूयमानः समारुह्य युयुत्सुः ककुदि स्थितः ॥ १५ ॥

तेजसाऽऽप्यायितो विष्णोः पुरुषस्य परात्मनः ।
प्रतीच्यां दिशि दैत्यानां न्यरुणत् त्रिदशैः पुरम् ॥ १६ ॥
तैस्तस्य चाभूत् प्रधनं तुमुलं लोमहर्षणम् ।
यमाय भल्लैरनयद् दैत्यान् येऽभिययुर्मृधे ॥ १७ ॥
तस्येषुपाताभिमुखं युगान्ताग्निं इवोल्बणम् ।
विसृज्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम् ॥ १८ ॥
जित्वा परं धनं सर्वं सश्रीकं वज्रपाणये ।
प्रत्ययच्छत्स राजर्षिः इति नामभिराहृतः ॥ १९ ॥
पुरञ्जयस्य पुत्रोऽभूद् अनेनास्तत्सुतः पृथुः ।
विश्वगन्धिस्ततश्चन्द्रो युवनाश्वस्तु तत्सुतः ॥ २० ॥
शाबस्तः तत्सुतो येन शाबस्ती निर्ममे पुरी ।
बृहदश्वस्तु शाबस्तिः ततः कुवलयाश्वकः ॥ २१ ॥
यः प्रियार्थमुतंकस्य धुन्धुनामासुरं बली ।
सुतानां एकविंशत्या सहस्रैः अहनद् वृतः ॥ २२ ॥
धुन्धुमार इति ख्यातः तत्सुतास्ते च जज्वलुः ।
धुन्धोर्मुखाग्निना सर्वे त्रय एवावशेषिताः ॥ २३ ॥
दृढाश्वः कपिलाश्वश्च भद्राश्व इति भारत ।
दृढाश्वपुत्रो हर्यश्वो निकुम्भः तत्सुतः स्मृतः ॥ २४ ॥
बहुलाश्वो निकुम्भस्य कृशाश्वोऽथास्य सेनजित् ।
युवनाश्वोऽभवत्तस्य सोऽनपत्यो वनं गतः ॥ २५ ॥
भार्याशतेन निर्विण्ण ऋषयोऽस्य कृपालवः ।
इष्टिं स्म वर्तयां चक्रुः ऐन्द्रीं ते सुसमाहिताः ॥ २६ ॥
राजा तद् यज्ञसदनं प्रविष्टो निशि तर्षितः ।
दृष्ट्वा शयानान् विप्रांस्तान् पपौ मंत्रजलं स्वयम् ॥ २७ ॥
उत्थितास्ते निशम्याथ व्युदकं कलशं प्रभो ।
पप्रच्छुः कस्य कर्मेदं पीतं पुंसवनं जलम् ॥ २८ ॥
राज्ञा पीतं विदित्वाथ ईश्वरप्रहितेन ते ।
ईश्वराय नमश्चक्रुः अहो दैवबलं बलम् ॥ २९ ॥
ततः काल उपावृत्ते कुक्षिं निर्भिद्य दक्षिणम् ।
युवनाश्वस्य तनयः चक्रवर्ती जजान ह ॥ ३० ॥
कं धास्यति कुमारोऽयं स्तन्यं रोरूयते भृशम् ।
मां धाता वत्स मा रोदीः इतीन्द्रो देशिनीमदात् ॥ ३१ ॥
न ममार पिता तस्य विप्रदेवप्रसादतः ।

युवनाश्वोऽथ तत्रैव तपसा सिद्धिमन्वगात् ॥ ३२ ॥
त्रसद्दस्युरितीन्द्रोऽङ्ग विदधे नाम यस्य वै ।
यस्मात् त्रसन्ति हि उद्विग्ना दस्यवो रावणादयः ॥ ३३ ॥
यौवनाश्वोऽथ मान्धाता चक्रवर्त्यवनीं प्रभुः ।
सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥ ३४ ॥
ईजे च यज्ञं क्रतुभिः आत्मविद् भूरिदक्षिणैः ।
सर्वदेवमयं देवं सर्वात्मकमतीन्द्रियम् ॥ ३५ ॥
द्रव्यं मंत्रो विधिर्यज्ञो यजमानस्तथर्त्विजः ।
धर्मो देशश्च कालश्च सर्वं एतद् यदात्मकम् ॥ ३६ ॥
यावत् सूर्य उदेति स्म यावच्च प्रतितिष्ठति ।
सर्वं तत् यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ ३७ ॥
शशबिन्दोर्दुहितरि बिन्दुमत्यामधान् नृपः ।
पुरुकुत्सं अंबरीषं मुचुकुन्दं च योगिनम् ।
तेषां स्वसारः पञ्चाशत् सौभरिं वव्रिरे पतिम् ॥ ३८॥
यमुनान्तर्जले मग्नः तप्यमानः परंतपः ।
निर्वृतिं मीनराजस्य दृष्ट्वा मैथुनधर्मिणः ॥ ३९ ॥
जातस्पृहो नृपं विप्रः कन्यां एकां अयाचत ।
सोऽप्याह गृह्यतां ब्रह्मन् कामं कन्या स्वयंवरे ॥ ४० ॥
स विचिन्त्याप्रियं स्त्रीणां जरठोऽयं असम्मतः ।
वलीपलित एजत्क इत्यहं प्रत्युदाहृतः ॥ ४१ ॥
साधयिष्ये तथात्मानं सुरस्त्रीणामभीप्सितम् ।
किं पुनर्मनुजेन्द्राणां इति व्यवसितः प्रभुः ॥ ४२ ॥
मुनिः प्रवेशितः क्षत्त्रा कन्यान्तःपुरमृद्धिमत् ।
वृतः स राजकन्याभिः एकं पञ्चाशता वरः ॥ ४३ ॥
तासां कलिरभूद् भूयान् तत् अर्थेऽपोह्य सौहृदम् ।
ममानुरूपो नायं व इति तद्गतचेतसाम् ॥ ४४ ॥
स बह्वृचस्ताभिरपारणीय
  तपःश्रियानर्घ्यपरिच्छदेषु ।
गृहेषु नानोपवनामलाम्भः
  सरःसु सौगन्धिककाननेषु ॥ ४५ ॥
महार्हशय्यासनवस्त्रभूषण
  स्नानानुलेपाभ्यवहारमाल्यकैः ।
स्वलङ्कृतस्त्रीपुरुषेषु नित्यदा

रेमेऽनुगायद् द्विजभृङ्गवन्दिषु ॥ ४६ ॥
यद्गार्हस्थ्यं तु संवीक्ष्य सप्तद्वीपवतीपतिः ।
विस्मितः स्तम्भमजहात् सार्वभौमश्रियान्वितम् ॥ ४७ ॥
एवं गृहेष्वभिरतो विषयान् विविधैः सुखैः ।
सेवमानो न चातुष्यद् आज्यस्तोकैरिवानलः ॥ ४८ ॥
स कदाचिद् उपासीन आत्मापह्नवमात्मनः ।
ददर्श बह्वृचाचार्यो मीनसङ्गसमुत्थितम् ॥ ४९ ॥
अहो इमं पश्यत मे विनाशं
तपस्विनः सच्चरितव्रतस्य ।
अन्तर्जले वारिचरप्रसङ्गात्
प्रच्यावितं ब्रह्म चिरं धृतं यत् ॥ ५० ॥
सङ्गं त्यजेत मिथुनव्रतीनां मुमुक्षुः ।
सर्वात्मना न विसृजेद् बहिरिन्द्रियाणि ॥
एकश्चरन् रहसि चित्तमनन्त ईशे ।
युञ्जीत तद्व्रतिषु साधुषु चेत् प्रसङ्गः ॥ ५१ ॥
एकस्तपस्व्यहमथाम्भसि मत्स्यसङ्गात्
पञ्चाशदासमुत पञ्चसहस्रसर्गः ।
नान्तं व्रजाम्युभयकृत्यमनोरथानां
मायागुणैः हृतमतिर्विषयेऽर्थभावः ॥ ५२ ॥
एवं वसन् गृहे कालं विरक्तो न्यासमास्थितः ।
वनं जगाम अनुययुः तत्पत्न्यः पतिदेवताः ॥ ५३ ॥
तत्र तप्त्वा तपस्तीक्ष्णं आत्मदर्शनमात्मवान् ।
सहैवाग्निभिरात्मानं युयोज परमात्मनि ॥ ५४ ॥
ताः स्वपत्युर्महाराज निरीक्ष्याध्यात्मिकीं गतिम् ।
अन्वीयुस्तत्प्रभावेण अग्निं शान्तमिवार्चिषः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां नवमस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

त्रिशंकुकथा हरिश्चंद्रचरितं च -

श्रीशुक उवाच ।
मान्धातुः पुत्रप्रवरो योऽम्बरीषः प्रकीर्तितः ।
पितामहेन प्रवृतो यौवनाश्वश्च तत्सुतः ।
हारीतस्तस्य पुत्रोऽभूत् मान्धातृप्रवरा इमे ॥ १ ॥
नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय योरगैः ।
तया रसातलं नीतो भुजगेन्द्रप्रयुक्तया ॥ २ ॥
गन्धर्वान् अवधीत् तत्र वध्यान् वै विष्णुशक्तिधृक् ।
नागाल्लब्धवरः सर्पात् अभयं स्मरतामिदम् ॥ ३ ॥
त्रसद्दस्युः पौरुकुत्सो योऽनरण्यस्य देहकृत् ।
हर्यश्वः तत्सुतः तस्मात् अरुणोऽथ त्रिबन्धनः ॥ ४ ॥
तस्य सत्यव्रतः पुत्रः त्रिशङ्कुरिति विश्रुतः ।
प्राप्तश्चाण्डालतां शापाग् गुरोः कौशिकतेजसा ॥ ५ ॥
सशरीरो गतः स्वर्गं अद्यापि दिवि दृश्यते ।
पातितोऽवाक्शिरा देवैः तेनैव स्तम्भितो बलात् ॥ ६ ॥
त्रैशङ्कवो हरिश्चन्द्रो विश्वामित्रवसिष्ठयोः ।
यन्निमित्तमभूद् युद्धं पक्षिणोर्बहुवार्षिकम् ॥ ७ ॥
सोऽनपत्यो विषण्णात्मा नारदस्योपदेशतः ।
वरुणं शरणं यातः पुत्रो मे जायतां प्रभो ॥ ८ ॥
यदि वीरो महाराज तेनैव त्वां यजे इति ।
तथेति वरुणेनास्य पुत्रो जातस्तु रोहितः ॥ ९ ॥
जातः सुतो ह्यनेनाङ्ग मां यजस्वेति सोऽब्रवीत् ।
यदा पशुर्निर्दशः स्याद् अथ मेध्यो भवेदिति ॥ १० ॥
निर्दशे च स आगत्य यजस्वेत्याह सोऽब्रवीत् ।
दन्ताः पशोर्यत् जायेरन् अथ मेध्यो भवेदिति ॥ ११ ॥
दन्ता जाता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ।
यदा पतन्त्यस्य दन्ता अथ मेध्यो भवेदिति ॥ १२ ॥
पशोर्निपतिता दन्ता यजस्वेत्याह सोऽब्रवीत् ।
यदा पशोः पुनर्दन्ता जायन्तेऽथ पशुः शुचिः ॥ १३ ॥
पुनर्जाता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ।
सान्नाहिको यदा राजन् राजन्योऽथ पशुः शुचिः ॥ १४ ॥
इति पुत्रानुरागेण स्नेहयन् त्रितचेतसा ।

कालं वञ्चयता तं तमुक्तो देवस्तमैक्षत ॥ १५ ॥
रोहितस्तदभिज्ञाय पितुः कर्म चिकीर्षितम् ।
प्राणप्रेप्सुर्धनुष्पाणिः अरण्यं प्रत्यपद्यत ॥ १६ ॥
पितरं वरुणग्रस्तं श्रुत्वा जातमहोदरम् ।
रोहितो ग्राममेयाय तमिन्द्रः प्रत्यषेधत ॥ १७ ॥
भूमेः पर्यटनं पुण्यं तीर्थक्षेत्रनिषेवणैः ।
रोहितायादिशच्छक्रः सोऽप्यरण्येऽवसत् समाम् ॥ १८ ॥
एवं द्वितीये तृतीये चतुर्थे पञ्चमे तथा ।
अभ्येत्याभ्येत्य स्थविरो विप्रो भूत्वाऽऽह वृत्रहा ॥ १९ ॥
षष्ठं संवत्सरं तत्र चरित्वा रोहितः पुरीम् ।
उपव्रजन् अजीगर्ताद् अक्रीणान् मध्यमं सुतम् ॥ २० ॥
शुनःशेपं पशुं पित्रे प्रदाय समवन्दत ।
ततः पुरुषमेधेन हरिश्चन्द्रो महायशाः ॥ २१ ॥
मुक्तोदरोऽयजद् देवान् वरुणादीन् महत्कथः ।
विश्वामित्रोऽभवत् तस्मिन् होता चाध्वर्युरात्मवान् ॥ २२ ॥
जमदग्निरभूद् ब्रह्मा वसिष्ठोऽयास्यः सामगः ।
तस्मै तुष्टो ददौ इन्द्रः शातकौम्भमयं रथम् ॥ २३ ॥
शुनःशेपस्य माहात्म्यं उपरिष्टात् प्रचक्ष्यते ।
सत्यंसारां धृतिं दृष्ट्वा सभार्यस्य च भूपतेः ॥ २४ ॥
विश्वामित्रो भृशं प्रीतो ददौ अविहतां गतिम् ।
मनः पृथिव्यां तामद्भिः तेजसापोऽनिलेन तत् ॥ २५ ॥
खे वायुं धारयन् तच्च भूतादौ तं महात्मनि ।
तस्मिन् ज्ञानकलां ध्यात्वा तयाज्ञानं विनिर्दहन् ॥ २६ ॥
हित्वा तां स्वेन भावेन निर्वाणसुखसंविदा ।
अनिर्देश्याप्रतर्क्येण तस्थौ विध्वस्तबन्धनः ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां नवमस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

सगरचरित्रम् -

श्रीशुक उवाच ।
हरितो रोहितसुतः चंपः तस्माद्विनिर्मिता ।
चंपापुरी सुदेवोऽतो विजयो यस्य चात्मजः ॥ १ ॥
भरुकस्तत्सुतस्तस्माद् वृकस्तस्यापि बाहुकः ।
सोऽरिभिर्हृतभू राजा सभार्यो वनमाविशत् ॥ २ ॥
वृद्धं तं पञ्चतां प्राप्तं महिष्यनु मरिष्यती ।
और्वेण जानतात्मानं प्रजावन्तं निवारिता ॥ ३ ॥
आज्ञायास्यै सपत्नीभिः गरो दत्तोऽन्धसा सह ।
सह तेनैव सञ्जातः सगराख्यो महायशाः ॥ ४ ॥
सगरश्चक्रवर्त्यासीत् सागरो यत्सुतैः कृतः ।
यस्तालजंघान् यवनात् शकान् हैहयबर्बरान् ॥ ५ ॥
नावधीद् गुरुवाक्येन चक्रे विकृतवेषिणः ।
मुण्डान् श्मश्रुधरान् कांश्चित् मुक्तकेशार्धमुण्डितान् ॥ ६ ॥
अनन्तर्वाससः कांश्चिद् अबहिर्वाससोऽपरान् ।
सोऽश्वमेधैरयजत सर्ववेदसुरात्मकम् ॥ ७ ॥
और्वोपदिष्टयोगेन हरिमात्मानमीश्वरम् ।
तस्योत्सृष्टं पशुं यज्ञे जहाराश्वं पुरन्दरः ॥ ८ ॥
सुमत्यास्तनया दृप्ताः पितुरादेशकारिणः ।
हयं अन्वेषमाणास्ते समन्तात् न्यखनन् मन्महीम् ॥ ९ ॥
प्राग् उदीच्यां दिशि हयं ददृशुः कपिलान्तिके ।
एष वाजिहरश्चौर आस्ते मीलितलोचनः ॥ १० ॥
हन्यतां हन्यतां पाप इति षष्टिसहस्रिणः ।
उदायुधा अभिययुः उन्मिमेष तदा मुनिः ॥ ११ ॥
स्वशरीराग्निना तावन् महेन्द्रहृतचेतसः ।
महद्व्यतिक्रमहता भस्मसाद् अभवन् क्षणात् ॥ १२ ॥
न साधुवादो मुनिकोपभर्जिता
नृपेन्द्रपुत्रा इति सत्त्वधामनि ।
कथं तमो रोषमयं विभाव्यते
जगत्पवित्रात्मनि खे रजो भुवः ॥ १३ ॥
यस्येरिता सांख्यमयी दृढेह नौः
ययामुमुक्षुस्तरते दुरत्ययम् ।

भवार्णवं मृत्युपथं विपश्चितः
   परात्मभूतस्य कथं पृथङ्मतिः ॥ १४ ॥
योऽसमञ्जस इत्युक्तः स केशिन्या नृपात्मजः ।
तस्य पुत्रोंऽशुमान्नाम पितामहहिते रतः ॥ १५ ॥
असमञ्जस आत्मानं दर्शयन् असमञ्जसम् ।
जातिस्मरः पुरा संगाद् योगी योगाद् विचालितः ॥ १६ ॥
आचरन् गर्हितं लोके ज्ञातीनां कर्म विप्रियम् ।
सरय्वां क्रीडतो बालान् प्रास्यदुद्वेजयञ्जनम् ॥ १७ ॥
एवंवृत्तः परित्यक्तः पित्रा स्नेहमपोह्य वै ।
योगैश्वर्येण बालान् तान् दर्शयित्वा ततो ययौ ॥ १८ ॥
अयोध्यावासिनः सर्वे बालकान् पुनरागतान् ।
दृष्ट्वा विसिस्मिरे राजन्राजा चाप्यन्वतप्यत ॥ १९ ॥
अंशुमांश्चोदितो राज्ञा तुरगान्वेषणे ययौ ।
पितृव्यखातानुपथं भस्मान्ति ददृशे हयम् ॥ २० ॥
तत्रासीनं मुनिं वीक्ष्य कपिलाख्यं अधोक्षजम् ।
अस्तौत् समाहितमनाः प्राञ्जलिः प्रणतो महान् ॥ २१ ॥
अंशुमानुवाच ।
न पश्यति त्वां परमात्मनोऽजनो
   न बुध्यतेऽद्यापि समाधियुक्तिभिः ।
कुतोऽपरे तस्य मनःशरीरधी
   विसर्गसृष्टा वयमप्रकाशाः ॥ २२ ॥
ये देहभाजस्त्रिगुणप्रधाना
   गुणान् विपश्यन्त्युत वा तमश्च ।
यन्मायया मोहितचेतसस्ते
   विदुः स्वसंस्थं न बहिःप्रकाशाः ॥ २३ ॥
तं त्वां अहं ज्ञानघनं स्वभाव
   प्रध्वस्तमायागुणभेदमोहैः ।
सनन्दनाद्यैर्मुनिभिर्विभाव्यं
   कथं विमूढः परिभावयामि ॥ २४ ॥
प्रशान्त मायागुणकर्मलिंगं
   अनामरूपं सदसद्विमुक्तम् ।
ज्ञानोपदेशाय गृहीतदेहं
   नमामहे त्वां पुरुषं पुराणम् ॥ २५ ॥

त्वन्मायारचिते लोके वस्तुबुद्ध्या गृहादिषु ।
भ्रमन्ति कामलोभेर्ष्या मोहविभ्रान्तचेतसः ॥ २६ ॥
अद्य नः सर्वभूतात्मन् कामकर्मेन्द्रियाशयः ।
मोहपाशो दृढश्छिन्नो भगवन् तव दर्शनात् ॥ २७ ॥
श्रीशुक उवाच ।
इत्थं गीतानुभावस्तं भगवान् कपिलो मुनिः ।
अंशुमन्तं उवाचेदं अनुग्राह्य धिया नृप ॥ २८ ॥
श्रीभगवानुवाच ।
अश्वोऽयं नीयतां वत्स पितामहपशुस्तव ।
इमे च पितरो दग्धा गंगाम्भोऽर्हन्ति नेतरत् ॥ २९ ॥
तं परिक्रम्य शिरसा प्रसाद्य हयमानयत् ।
सगरस्तेन पशुना यज्ञशेषं समापयत् ॥ ३० ॥
राज्यं अंशुमते न्यस्य निःस्पृहो मुक्तबन्धनः ।
और्वोपदिष्टमार्गेण लेभे गतिमनुत्तमाम् ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां नवमस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

नलिन्यां अजमीढस्य नीलः शान्तिः सुतस्ततः ॥ ३० ॥
शान्तेः सुशान्तिस्तत्पुत्रः पुरुजोऽर्कस्ततोऽभवत् ।
भर्म्याश्वः तनयस्तस्य पञ्चासन् मुद्गलादयः ॥ ३१ ॥
यवीनरो बृहद्विश्वः काम्पिल्यः सञ्जयः सुताः ।
भर्म्याश्वः प्राह पुत्रा मे पञ्चानां रक्षणाय हि ॥ ३२ ॥
विषयाणामलमिमे इति पञ्चालसंज्ञिताः ।
मुद्गलाद् ब्रह्मनिर्वृत्तं गोत्रं मौद्गल्यसंज्ञितम् ॥ ३३ ॥
मिथुनं मुद्गलाद् भार्म्याद् दिवोदासः पुमानभूत् ।
अहल्या कन्यका यस्यां शतानन्दस्तु गौतमात् ॥ ३४ ॥
तस्य सत्यधृतिः पुत्रो धनुर्वेदविशारदः ।
शरद्वान् तत्सुतो यस्माद् उर्वशीदर्शनात् किल ॥ ३५ ॥
शरस्तम्बेऽपतद् रेतो मिथुनं तदभूच्छुभम् ।
तद्दृष्ट्वा कृपयागृह्णात् शन्तनुर्मृगयां चरन् ।
कृपः कुमारः कन्या च द्रोणपत्न्यभवत् कृपी ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां नवमस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

दिवोदासादिवंशकथनम्, ऋक्षवंशे पाण्डवादि उत्पत्तिश्च -

श्रीशुक उवाच ।
मित्रेयुश्च दिवोदासात् च्यवनः तत्सुतो नृप ।
सुदासः सहदेवोऽथ सोमको जन्तुजन्मकृत् ॥ १ ॥
तस्य पुत्रशतं तेषां यवीयान् पृषतः सुतः ।
द्रुपदो द्रौपदी तस्यजज्ञे धृष्टद्युम्नादयः सुताः ॥ २ ॥
धृष्टद्युम्नात् धृष्टकेतुः भार्म्याः पाञ्चालका इमे ।
योऽजमीढसुतो ह्यन्य ऋक्षः संवरणस्ततः ॥ ३ ॥
तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः ।
परीक्षित् सुधनुर्जह्नुः निषधाश्व कुरोः सुताः ॥ ४ ॥
सुहोत्रोऽभूत् सुधनुषः च्यवनोऽथ ततः कृती ।
वसुस्तस्योपरिचरो बृहद्रथमुखास्ततः ॥ ५ ॥
कुशाम्बमत्स्यप्रत्यग्र चेदिपाद्याश्च चेदिपाः ।
बृहद्रथात्कुशाग्रोऽभूत् ऋषभस्तस्य तत्सुतः ॥ ६ ॥
जज्ञे सत्यहितोऽपत्यं पुष्पवान् तत्सुतो जहुः ।
अन्यस्यामपि भार्यायां शकले द्वे बृहद्रथात् ॥ ७ ॥
ये मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते ।
जीव जीवेति क्रीडन्त्या जरासन्धोऽभवत् सुतः ॥ ८ ॥
ततश्च सहदेवोऽभूत् सोमापिर्यत् श्रुतश्रवाः ।
परीक्षिद् अनपत्योऽभूत् सुरथो नाम जाह्नवः ॥ ९ ॥
ततो विदूरथस्तस्मात् सार्वभौमस्ततोऽभवत् ।
जयसेनस्तत् तनयो राधिकोऽतोऽयुताय्वभूत् ॥ १० ॥
ततश्च क्रोधनस्तस्मात् देवातिथिरमुष्य च ।
ऋष्यस्तस्य दिलीपोऽभूत् प्रतीपस्तस्य चात्मजः ॥ ११ ॥
देवापिः शान्तनुस्तस्य बाह्लीक इति चात्मजाः ।
पितृराज्यं परित्यज्य देवापिस्तु वनं गतः ॥ १२ ॥
अभवत् शन्तनू राजा प्राङ्महाभिषसंज्ञितः ।
यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः ॥ १३ ॥
शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः ।
समा द्वादश तद्राज्ये न ववर्ष यदा विभुः ॥ १४ ॥
शन्तनुर्ब्राह्मणैरुक्तः परिवेत्तायमग्रभुक् ।
राज्यं देह्यग्रजायाशु पुरराष्ट्रविवृद्धये ॥ १५ ॥

एवमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत् ।
तन्मंत्रिप्रहितैर्विप्रैः वेदाद् विभ्रंशितो गिरा ॥ १६ ॥
वेदवादातिवादान् वै तदा देवो ववर्ष ह ।
देवापिर्योगमास्थाय कलापग्राममाश्रितः ॥ १७ ॥
सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति ।
बाह्लीकात्सोमदत्तोऽभूद् भूरिर्भूरिश्रवास्ततः ॥ १८ ॥
शलश्च शन्तनोरासीद् गंगायां भीष्म आत्मवान् ।
सर्वधर्मविदां श्रेष्ठो महाभागवतः कविः ॥ १९ ॥
वीरयूथाग्रणीर्येन रामोऽपि युधि तोषितः ।
शन्तनोर्दाशकन्यायां जज्ञे चित्रांगदः सुतः ॥ २० ॥
विचित्रवीर्यश्चावरजो नाम्ना चित्रांगदो हतः ।
यस्यां पराशरात्साक्षाद् अवतीर्णो हरेः कला ॥ २१ ॥
वेदगुप्तो मुनिः कृष्णो यतोऽहं इदमध्यगाम् ।
हित्वा स्वशिष्यान् पैलादीन् भगवान् बादरायणः ॥ २२ ॥
मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगौ ।
विचित्रवीर्योऽथोवाह काशीराजसुते बलात् ॥ २३ ॥
स्वयंवराद् उपानीते अम्बिकाम्बालिके उभे ।
तयोरासक्तहृदयो गृहीतो यक्ष्मणा मृतः ॥ २४ ॥
क्षेत्रेऽप्रजस्य वै भ्रातुः मात्रोक्तो बादरायणः ।
धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत् ॥ २५ ॥
गान्धार्यां धृतराष्ट्रस्य जज्ञे पुत्रशतं नृप ।
तत्र दुर्योधनो ज्येष्ठो दुःशला चापि कन्यका ॥ २६ ॥
शापात् मैथुनरुद्धस्य पाण्डोः कुन्त्यां महारथाः ।
जाता धर्मानिलेन्द्रेभ्यो युधिष्ठिरमुखास्त्रयः ॥ २७ ॥
नकुलः सहदेवश्च माद्र्यां नासत्यदस्रयोः ।
द्रौपद्यां पञ्च पञ्चभ्यः पुत्रास्ते पितरोऽभवन् ॥ २८ ॥
युधिष्ठिरात्प्रतिविन्ध्यः श्रुतसेनो वृकोदरात् ।
अर्जुनात् श्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ २९ ॥
सहदेवसुतो राजन् श्रुतकर्मा तथापरे ।
युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः ॥ ३० ॥
भीमसेनाद् हिडिम्बायां काल्यां सर्वगतस्ततः ।
सहदेवात् सुहोत्रं तु विजयासूत पार्वती ॥ ३१ ॥
करेणुमत्यां नकुलो नरमित्रं तथार्जुनः ।

इरावन्तमुलूप्यां वै सुतायां बभ्रुवाहनम् ।
मणिपुरपतेः सोऽपि तत्पुत्रः पुत्रिकासुतः ॥ ३२ ॥
तव तातः सुभद्रायां अभिमन्युरजायत ।
सर्वातिरथजिद् वीर उत्तरायां ततो भवान् ॥ ३३ ॥
परिक्षीणेषु कुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा ।
त्वं च कृष्णानुभावेन सजीवो मोचितोऽन्तकात् ॥ ३४ ॥
तवेमे तनयास्तात जनमेजयपूर्वकाः ।
श्रुतसेनो भीमसेन उग्रसेनश्च वीर्यवान् ॥ ३५ ॥
जनमेजयस्त्वां विदित्वा तक्षकान्निधनं गतम् ।
सर्पान् वै सर्पयागाग्नौ स होष्यति रुषान्वितः ॥ ३६ ॥
कावषेयं पुरोधाय तुरं तुरगमेधयाट् ।
समन्तात् पृथिवीं सर्वां जित्वा यक्ष्यति चाध्वरैः ॥ ३७ ॥
तस्य पुत्रः शतानीको याज्ञवल्क्यात् त्रयीं पठन् ।
अस्त्रज्ञानं क्रियाज्ञानं शौनकात् परमेष्यति ॥ ३८ ॥
सहस्रानीकस्तत्पुत्रः ततश्चैवाश्वमेधजः ।
असीमकृष्णस्तस्यापि नेमिचक्रस्तु तत्सुतः ॥ ३९ ॥
गजाह्वये हृते नद्या कौशाम्ब्यां साधु वत्स्यति ।
उक्तस्ततश्चित्ररथः तस्मात् कविरथः सुतः ॥ ४० ॥
तस्माच्च वृष्टिमांस्तस्य सुषेणोऽथ महीपतिः ।
सुनीथस्तस्य भविता नृचक्षुर्यत् सुखीनलः ॥ ४१ ॥
परिप्लवः सुतस्तस्मात् मेधावी सुनयात्मजः ।
नृपञ्जयस्ततो दूर्वः तिमिः तस्मात् जनिष्यति ॥ ४२ ॥
तिमेर्बृहद्रथः तस्मात् शतानीकः सुदासजः ।
शतानीकाद् दुर्दमनः तस्यापत्यं बहीनरः ॥ ४३ ॥
दण्डपाणिर्निमिस्तस्य क्षेमको भविता यतः ।
ब्रह्मक्षत्रस्य वै प्रोक्तो वंशो देवर्षिसत्कृतः ॥ ४४ ॥
क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ।
अथ मागधराजानो भवितारो ये वदामि ते ॥ ४५ ॥
भविता सहदेवस्य मार्जारिर्यत् श्रुतश्रवाः ।
ततो युतायुः तस्यापि निरमित्रोऽथ तत्सुतः ॥ ४६ ॥
सुनक्षत्रः सुनक्षत्राद् बृहत्सेनोऽथ कर्मजित् ।
ततः सुतञ्जयाद् विप्रः शुचिस्तस्य भविष्यति ॥ ४७ ॥
क्षेमोऽथ सुव्रतस्तस्माद् धर्मसूत्रः शमस्ततः ।

द्युमत्सेनोऽथ सुमतिः सुबलो जनिता ततः ॥ ४८ ॥
सुनीथः सत्यजिदथ विश्वजित् यद् रिपुञ्जयः ।
बार्हद्रथाश्च भूपाला भाव्याः साहस्रवत्सरम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां नवमस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

अनुद्रुह्युतुर्वसु यदूनां वंशवर्णनम् -

श्रीशुक उवाच ।

अनोः सभानरश्चक्षुः परोक्षश्च त्रयः सुताः ।
सभानरात् कालनरः सृञ्जयः तत्सुतस्ततः ॥ १ ॥
जनमेजयः तस्य पुत्रो महाशालो महामनाः ।
उशीनरः तितिक्षुश्च महामनस आत्मजौ ॥ २ ॥
शिबिर्वनः शमिर्दक्षः चत्वार् उशीनरात्मजाः ।
वृषादर्भः सुधीरश्च मद्रः केकय आत्मवान् ॥ ३ ॥
शिबेश्चत्वार एवासन् तितिक्षोश्च रुशद्रथः ।
ततो होमोऽथ सुतपा बलिः सुतपसोऽभवत् ॥ ४ ॥
अंगवंगकलिंगाद्याः सुह्मपुण्ड्रान्ध्रसंज्ञिताः ।
जज्ञिरे दीर्घतमसो बलेः क्षेत्रे महीक्षितः ॥ ५ ॥
चक्रुः स्वनाम्ना विषयान् षडिमान् प्राच्यकांश्च ते ।
खनपानोऽङ्गतो जज्ञे तस्माद् दिविरथस्ततः ॥ ६ ॥
सुतो धर्मरथो यस्य जज्ञे चित्ररथोऽप्रजाः ।
रोमपाद इति ख्यातः तस्मै दशरथः सखा ॥ ७ ॥
शान्तां स्वकन्यां प्रायच्छद् ऋष्यशृङ्ग उवाह याम् ।
देवेऽवर्षति यं रामा आनिन्युर्हरिणीसुतम् ॥ ८ ॥
नाट्यसंगीतवादित्रैः विभ्रमालिंगनार्हणैः ।
स तु राज्ञोऽनपत्यस्य निरूप्येष्टिं मरुत्वतः ॥ ९ ॥
प्रजामदाद् दशरथो येन लेभेऽप्रजाः प्रजाः ।
चतुरंगो रोमपादात् पृथुलाक्षस्तु तत्सुतः ॥ १० ॥
बृहद्रथो बृहत्कर्मा बृहद्भानुश्च तत्सुताः ।
आद्याद् बृहन्मनास्तस्मात् जयद्रथ उदाहृतः ॥ ११ ॥
विजयस्तस्य संभूत्यां ततो धृतिरजायत ।
ततो धृतव्रतस्तस्य सत्कर्माधिरथस्ततः ॥ १२ ॥
योऽसौ गंगातटे क्रीडन् मञ्जूषान्तर्गतं शिशुम् ।
कुन्त्यापविद्धं कानीनं अनपत्योऽकरोत्सुतम् ॥ १३ ॥
वृषसेनः सुतस्तस्य कर्णस्य जगतीपते ।
द्रुह्योश्च तनयो बभ्रुः सेतुः तस्यात्मजस्ततः ॥ १४ ॥
आरब्धस्तस्य गान्धारः तस्य धर्मस्ततो धृतः ।
धृतस्य दुर्मदस्तस्मात् प्रचेताः प्राचेतसः शतम् ॥ १५ ॥

म्लेच्छाधिपतयोऽभूवन् उदीचीं दिशमाश्रिताः ।
तुर्वसोश्च सुतो वह्निः वह्नेर्भर्गोऽथ भानुमान् ॥ १६ ॥
त्रिभानुस्तत्सुतोऽस्यापि करन्धम उदारधीः ।
मरुतस्तत्सुतोऽपुत्रः पुत्रं पौरवमन्वभूत् ॥ १७ ॥
दुष्मन्तः स पुनर्भेजे स्व वंशं राज्यकामुकः ।
ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ ॥ १८ ॥
वर्णयामि महापुण्यं सर्वपापहरं नृणाम् ।
यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ॥ १९ ॥
यत्रावतीर्णो भगवान् परमात्मा नराकृतिः ।
यदोः सहस्रजित्क्रोष्टा नलो रिपुरिति श्रुताः ॥ २० ॥
चत्वारः सूनवस्तत्र शतजित् प्रथमात्मजः ।
महाहयो रेणुहयो हैहयश्चेति तत्सुताः ॥ २१ ॥
धर्मस्तु हैहयसुतो नेत्रः कुन्तेः पिता ततः ।
सोहञ्जिरभवत् कुन्तेः महिष्मान् भद्रसेनकः ॥ २२ ॥
दुर्मदो भद्रसेनस्य धनकः कृतवीर्यसूः ।
कृताग्निः कृतवर्मा च कृतौजा धनकात्मजाः ॥ ॥
अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत् ।
दत्तात्रेयात् हरेरंशात् प्राप्तयोगमहागुणः ॥ २४ ॥
न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ।
यज्ञदानतपोयोग श्रुतवीर्यदयादिभिः ॥ २५ ॥
पञ्चाशीति सहस्राणि ह्यव्याहतबलः समाः ।
अनष्टवित्तस्मरणो बुभुजेऽक्षय्यषड्वसु ॥ २६ ॥
तस्य पुत्रसहस्रेषु पञ्चैवोर्वरिता मृधे ।
जयध्वजः शूरसेनो वृषभो मधुरूर्जितः ॥ २७ ॥
जयध्वजात् तालजंघ तस्य पुत्रशतं त्वभूत् ।
क्षत्रं यत् तालजंघाख्यं और्वतेजोपसंहृतम् ॥ २८ ॥
तेषां ज्येष्ठो वीतिहोत्रो वृष्णिः पुत्रो मधोः स्मृतः ।
तस्य पुत्रशतं त्वासीत् वृष्णिज्येष्ठं यतः कुलम् ॥ २९ ॥
माधवा वृष्णयो राजन् यादवाश्चेति संज्ञिताः ।
यदुपुत्रस्य च क्रोष्टोः पुत्रो वृजिनवांस्ततः ॥ ३० ॥
स्वाहितोऽतो रुशेकुर्वै तस्य चित्ररथस्ततः ।
शशबिन्दुर्महायोगी महाभागो महानभूत् ॥ ३१ ॥
चतुर्दशमहारत्नः चक्रवर्ति अपराजितः ।

तस्य पत्नीसहस्राणां दशानां सुमहायशाः ॥ ३२ ॥
दशलक्षसहस्राणि पुत्राणां तास्वजीजनत् ।
तेषां तु षट्प्रधानानां पृथुश्रवस आत्मजः ॥ ३३ ॥
धर्मो नामोशना तस्य हयमेधशतस्य याट् ।
तत्सुतो रुचकस्तस्य पञ्चासन्नात्मजाः शृणु ॥ ३४ ॥
पुरुजित् रुक्म रुक्मेषु पृथु ज्यामघ संज्ञिताः ।
ज्यामघस्त्वप्रजोऽप्यन्यां भार्यां शैब्यापतिर्भयात् ॥ ३५ ॥
नाविन्दत् शत्रुभवनाद् भोज्यां कन्यामहारषीत् ।
रथस्थां तां निरीक्ष्याह शैब्या पतिममर्षिता ॥ ३६ ॥
केयं कुहक मत्स्थानं रथमारोपितेति वै ।
स्नुषा तवेत्यभिहिते स्मयन्ती पतिमब्रवीत् ॥ ३७ ॥
अहं बन्ध्यासपत्नी च स्नुषा मे युज्यते कथम् ।
जनयिष्यसि यं राज्ञि तस्येयमुपयुज्यते ॥ ३८ ॥
अन्वमोदन्त तद्विश्वे देवाः पितर एव च ।
शैब्या गर्भं अधात्काले कुमारं सुषुवे शुभम् ।
स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम् ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां नवमस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

श्रीशुक उवाच

तस्यां विदर्भोऽजनयत्पुत्रौ नाम्ना कुशक्रथौ

तृतीयं रोमपादं च विदर्भकुलनन्दनम् १

रोमपादसुतो बभ्रुर्बभ्रोः कृतिरजायत

उशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयो नृपाः २

क्रथस्य कुन्तिः पुत्रोऽभूद्वृष्णिस्तस्याथ निर्वृतिः

ततो दशार्हो नाम्नाभूत्तस्य व्योमः सुतस्ततः ३

जीमूतो विकृतिस्तस्य यस्य भीमरथः सुतः

ततो नवरथः पुत्रो जातो दशरथस्ततः ४

करम्भिः शकुनेः पुत्रो देवरातस्तदात्मजः

देवक्षत्रस्ततस्तस्य मधुः कुरुवशादनुः ५

पुरुहोत्रस्त्वनोः पुत्रस्तस्यायुः सात्वतस्ततः

भजमानो भजिर्दिव्यो वृष्णिर्देवावृधोऽन्धकः ६

सात्वतस्य सुताः सप्त महाभोजश्च मारिष

भजमानस्य निम्लोचिः किङ्कणो धृष्टिरेव च ७

एकस्यामात्मजाः पत्न्यामन्यस्यां च त्रयः सुताः

शताजिच्च सहस्राजिदयुताजिदिति प्रभो ८

बभ्रुर्देवावृधसुतस्तयोः श्लोकौ पठन्त्यमू

यथैव शृणुमो दूरात्सम्पश्यामस्तथान्तिकात् ९

बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः

पुरुषाः पञ्चषष्टिश्च षट्सहस्राणि चाष्ट च १०

येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि

महाभोजोऽतिधर्मात्मा भोजा आसंस्तदन्वये ११

वृष्णेः सुमित्रः पुत्रोऽभूद्युधाजिच्च परन्तप

शिनिस्तस्यानमित्रश्च निघ्नोऽभूदनमित्रतः १२

सत्राजितः प्रसेनश्च निघ्नस्याथासतुः सुतौ

अनमित्रसुतो योऽन्यः शिनिस्तस्य च सत्यकः १३

युयुधानः सात्यकिर्वै जयस्तस्य कुणिस्ततः

युगन्धरोऽनमित्रस्य वृष्णिः पुत्रोऽपरस्ततः १४
श्वफल्कश्चित्ररथश्च गान्दिन्यां च श्वफल्कतः
अक्रूरप्रमुखा आसन्पुत्रा द्वादश विश्रुताः १५
आसङ्गः सारमेयश्च मृदुरो मृदुविद्गिरिः
धर्मवृद्धः सुकर्मा च क्षेत्रोपेक्षोऽरिमर्दनः १६
शत्रुघ्नो गन्धमादश्च प्रतिबाहुश्च द्वादश
तेषां स्वसा सुचाराख्या द्वावक्रूरसुतावपि १७
देववानुपदेवश्च तथा चित्ररथात्मजाः
पृथुर्विदूरथाद्याश्च बहवो वृष्णिनन्दनाः १८
कुकुरो भजमानश्च शुचिः कम्बलबर्हिषः
कुकुरस्य सुतो वह्निर्विलोमा तनयस्ततः १९
कपोतरोमा तस्यानुः सखा यस्य च तुम्बुरुः
अन्धकाद्दुन्दुभिस्तस्मादविद्योतः पुनर्वसुः २०
तस्याहुकश्चाहुकी च कन्या चैवाहुकात्मजौ
देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः २१
देववानुपदेवश्च सुदेवो देववर्धनः
तेषां स्वसारः सप्तासन्धृतदेवादयो नृप २२
शान्तिदेवोपदेवा च श्रीदेवा देवरक्षिता
सहदेवा देवकी च वसुदेव उवाह ताः २३
कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः सुहूस्तथा
राष्ट्रपालोऽथ धृष्टिश्च तुष्टिमानौग्रसेनयः २४
कंसा कंसवती कङ्का शूरभू राष्टपालिका
उग्रसेनदुहितरो वसुदेवानुजस्त्रियः २५
शूरो विदूरथादासीद्भजमानस्तु तत्सुतः
शिनिस्तस्मात्स्वयं भोजो हृदिकस्तत्सुतो मतः २६
देवमीढः शतधनुः कृतवर्मेति तत्सुताः
देवमीढस्य शूरस्य मारिषा नाम पत्न्यभूत् २७
तस्यां स जनयामास दश पुत्रानकल्मषान्

वसुदेवं देवभागं देवश्रवसमानकम् २८
सृञ्जयं श्यामकं कङ्कं शमीकं वत्सकं वृकम्
देवदुन्दुभयो नेदुरानका यस्य जन्मनि २९
वसुदेवं हरेः स्थानं वदन्त्यानकदुन्दुभिम्
पृथा च श्रुतदेवा च श्रुतकीर्तिः श्रुतश्रवाः ३०
राजाधिदेवी चैतेषां भगिन्यः पञ्च कन्यकाः
कुन्तेः सख्युः पिता शूरो ह्यपुत्रस्य पृथामदात् ३१
साप दुर्वाससो विद्यां देवहूतीं प्रतोषितात्
तस्या वीर्यपरीक्षार्थमाजुहाव रविं शुचिः ३२
तदैवोपागतं देवं वीक्ष्य विस्मितमानसा
प्रत्ययार्थं प्रयुक्ता मे याहि देव क्षमस्व मे ३३
अमोघं देवसन्दर्शमादधे त्वयि चात्मजम्
योनिर्यथा न दुष्येत कर्ताहं ते सुमध्यमे ३४
इति तस्यां स आधाय गर्भं सूर्यो दिवं गतः
सद्यः कुमारः सञ्जज्ञे द्वितीय इव भास्करः ३५
तं सात्यजन्नदीतोये कृच्छ्राल्लोकस्य बिभ्यती
प्रपितामहस्तामुवाह पाण्डुर्वै सत्यविक्रमः ३६
श्रुतदेवां तु कारूषो वृद्धशर्मा समग्रहीत्
यस्यामभूद्दन्तवक्र ऋषिशप्तो दितेः सुतः ३७
कैकेयो धृष्टकेतुश्च श्रुतकीर्तिमविन्दत
सन्तर्दनादयस्तस्यां पञ्चासन्कैकयाः सुताः ३८
राजाधिदेव्यामावन्त्यौ जयसेनोऽजनिष्ट ह
दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत् ३९
शिशुपालः सुतस्तस्याः कथितस्तस्य सम्भवः
देवभागस्य कंसायां चित्रकेतुबृहद्बलौ ४०
कंसवत्यां देवश्रवसः सुवीर इषुमांस्तथा
बकः कङ्कात्तु कङ्कायां सत्यजित्पुरुजित्तथा ४१
सृञ्जयो राष्ट्रपाल्यां च वृषदुर्मर्षणादिकान्

हरिकेशहिरण्याक्षौ शूरभूम्यां च श्यामकः ४२
मिश्रकेश्यामप्सरसि वृकादीन्वत्सकस्तथा
तक्षपुष्करशालादीन्दुर्वाक्ष्यां वृक आदधे ४३
सुमित्रार्जुनपालादीन्समीकात्तु सुदामनी
आनकः कर्णिकायां वै ऋतधामाजयावपि ४४
पौरवी रोहिणी भद्रा मदिरा रोचना इला
देवकीप्रमुखाश्चासन्पत्न्य आनकदुन्दुभेः ४५
बलं गदं सारणं च दुर्मदं विपुलं ध्रुवम्
वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत् ४६
सुभद्रो भद्र बाहुश्च दुर्मदो भद्र एव च
पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन् ४७
नन्दोपनन्दकृतक शूराद्या मदिरात्मजाः
कौशल्या केशिनं त्वेकमसूत कुलनन्दनम् ४८
रोचनायामतो जाता हस्तहेमाङ्गदादयः
इलायामुरुवल्कादीन्यदुमुख्यानजीजनत् ४९
विपृष्ठो धृतदेवायामेक आनकदुन्दुभेः
शान्तिदेवात्मजा राजन्प्रशमप्रसितादयः ५०
राजन्यकल्पवर्षाद्या उपदेवासुता दश
वसुहंससुवंशाद्याः श्रीदेवायास्तु षट्सुताः ५१
देवरक्षितया लब्धा नव चात्र गदादयः
वसुदेवः सुतानष्टावादधे सहदेवया ५२
प्रवरश्रतमुख्यांश्च साक्षाद्धर्मो वसूनिव
वसुदेवस्तु देवक्यामष्ट पुत्रानजीजनत् ५३
कीर्तिमन्तं सुषेणं च भद्र सेनमुदारधीः
ऋजुं सम्मर्दनं भद्रं सङ्कर्षणमहीश्वरम् ५४
अष्टमस्तु तयोरासीत्स्वयमेव हरिः किल
सुभद्रा च महाभागा तव राजन्पितामही ५५
यदा यदा हि धर्मस्य क्षयो वृद्धिश्च पाप्मनः

तदा तु भगवानीश आत्मानं सृजते हरिः ५६
न ह्यस्य जन्मनो हेतुः कर्मणो वा महीपते
आत्ममायां विनेशस्य परस्य द्र ष्टुरात्मनः ५७
यन्मायाचेष्टितं पुंसः स्थित्युत्पत्त्यप्ययाय हि
अनुग्रहस्तन्निवृत्तेरात्मलाभाय चेष्यते ५८
अक्षौहिणीनां पतिभिरसुरैर्नृपलाञ्छनैः
भुव आक्रम्यमाणाया अभाराय कृतोद्यमः ५९
कर्माण्यपरिमेयाणि मनसापि सुरेश्वरैः
सहसङ्कर्षणश्चक्रे भगवान्मधुसूदनः ६०
कलौ जनिष्यमाणानां दुःखशोकतमोनुदम्
अनुग्रहाय भक्तानां सुपुण्यं व्यतनोद्यशः ६१
यस्मिन्सत्कर्णपीयुषे यशस्तीर्थवरे सकृत्
श्रोत्राञ्जलिरुपस्पृश्य धुनुते कर्मवासनाम् ६२
भोजवृष्ण्यन्धकमधु शूरसेनदशार्हकैः
श्लाघनीयेहितः शश्वत्कुरुसृञ्जयपाण्डुभिः ६३
स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया
नृलोकं रमयामास मूर्त्या सर्वाङ्गरम्यया ६४
यस्याननं मकरकुण्डलचारुकर्ण भ्राजत्कपोलसुभगं सविलासहासम्
नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च ६५
जातो गतः पितृगृहाद्व्रजमेधितार्थो हत्वा रिपून्सुतशतानि कृतोरुदारः
उत्पाद्य तेषु पुरुषः क्रतुभिः समीजे आत्मानमात्मनिगमं प्रथयन्जनेषु ६६
पृथ्व्याः स वै गुरुभरं क्षपयन्कुरूणामन्तःसमुत्थकलिना युधि भूपचम्वः
दृष्ट्या विधूय विजये जयमुद्विघोष्य प्रोच्योद्धवाय च परं समगात्स्वधाम ६७

इति श्रीमद्भागवते महापुराणे वैयासिक्यामष्टादशसाहस्र्यां पारमहंस्यां संहितायां नवमस्कन्धे श्रीसूर्यसोमवंशानुकीर्तने यदुवंशानुकीर्तनं नाम चतुर्विंशोऽध्यायः

इति नवमः स्कन्धः समाप्तः

श्रीकृष्णावतारोपक्रमः, ब्रह्मकर्तृकं पृथिव्या आश्वासनं कंसस्य देवकीवधोद्योगाद् वसुदेववचनेन निवृत्तिः, षण्णां देवकीपुत्राणां कंसकतृको वधश्च -

श्रीराजोवाच ।

( अनुष्टुप् )

कथितो वंशविस्तारो भवता सोमसूर्ययोः ।
राज्ञां च उभयवंश्यानां चरितं परमाद्‌भुतम् ॥ १ ॥
यदोश्च धर्मशीलस्य नितरां मुनिसत्तम ।
तत्रांशेन अवतीर्णस्य विष्णोर्वीर्याणि शंस नः ॥ २ ॥
अवतीर्य यदोर्वंशे भगवान् भूतभावनः ।
कृतवान् यानि विश्वात्मा तानि नो वद विस्तरात् ॥ ३ ॥

( उपेंद्रवज्रा )

निवृत्ततर्षैः उपगीयमानाद्
भवौषधात् श्रोत्रमनोऽभिरामात् ।
क उत्तमश्लोकगुणानुवादात्
पुमान् विरज्येत विना पशुघ्नात् ॥ ४ ॥

( वंशस्थ )

पितामहा मे समरेऽमरञ्जयैः
देवव्रताद्यातिरथैस्तिमिङ्गिलैः ।
दुरत्ययं कौरवसैन्यसागरं
कृत्वातरन् वत्सपदं स्म यत्प्लवाः ॥ ५ ॥

( इंद्रवज्रा )

द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं
सन्तानबीजं कुरुपाण्डवानाम् ।
जुगोप कुक्षिं गत आत्तचक्रो
मातुश्च मे यः शरणं गतायाः ॥ ६ ॥
वीर्याणि तस्याखिलदेहभाजां
अन्तर्बहिः पूरुषकालरूपैः ।
प्रयच्छतो मृत्युमुतामृतं च
मायामनुष्यस्य वदस्व विद्वन् ॥ ७ ॥

( अनुष्टुप् )

रोहिण्यास्तनयः प्रोक्तो रामः संकर्षणस्त्वया ।
देवक्या गर्भसंबंधः कुतो देहान्तरं विना ॥ ८ ॥

कस्मात् मुकुन्दो भगवान् पितुर्गेहाद् व्रजं गतः ।
क्व वासं ज्ञातिभिः सार्धं कृतवान् सात्वतां पतिः ॥ ९ ॥
व्रजे वसन् किं अकरोत् मधुपुर्यां च केशवः ।
भ्रातरं चावधीत् कंसं मातुः अद्धा अतदर्हणम् ॥ १० ॥
देहं मानुषमाश्रित्य कति वर्षाणि वृष्णिभिः ।
यदुपुर्यां सहावात्सीत् पत्न्यः कत्यभवन् प्रभोः ॥ ११ ॥
एतत् अन्यच्च सर्वं मे मुने कृष्णविचेष्टितम् ।
वक्तुमर्हसि सर्वज्ञ श्रद्दधानाय विस्तृतम् ॥ १२ ॥
नैषातिदुःसहा क्षुन्मां त्यक्तोदं अपि बाधते ।
पिबन्तं त्वन्मुखाम्भोज अच्युतं हरिकथामृतम् ॥ १३ ॥

सूत उवाच ।
( वसंततिलका )
एवं निशम्य भृगुनन्दन साधुवादं ।
वैयासकिः स भगवान् अथ विष्णुरातम् ।
प्रत्यर्च्य कृष्णचरितं कलिकल्मषघ्नं ।
व्याहर्तुमारभत भागवतप्रधानः ॥ १४ ॥

श्रीशुक उवाच ।
( अनुष्टुप् )
सम्यग्व्यवसिता बुद्धिः तव राजर्षिसत्तम ।
वासुदेवकथायां ते यज्जाता नैष्ठिकी रतिः ॥ १५ ॥
वासुदेवकथाप्रश्नः पुरुषान् त्रीन् पुनाति हि ।
वक्तारं पृच्छकं श्रोतॄन् तत्पादसलिलं यथा ॥ १६ ॥

भूमिः दृप्तनृपव्याज दैत्यानीकशतायुतैः ।
आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ ॥ १७ ॥
गौर्भूत्वा अश्रुमुखी खिन्ना क्रन्दन्ती करुणं विभोः ।
उपस्थितान्तिके तस्मै व्यसनं स्वं अवोचत ॥ १८ ॥
ब्रह्मा तद् उपधार्याथ सह देवैस्तया सह ।
जगाम स-त्रिनयनः तीरं क्षीरपयोनिधेः ॥ १९ ॥
तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम् ।
पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः ॥ २० ॥
( वंशस्थ )

गिरं समाधौ गगने समीरितां
    निशम्य वेधास्त्रिदशानुवाच ह ।
गां पौरुषीं मे श्रृणुतामराः पुनः
    विधीयतां आशु तथैव मा चिरम् ॥ २१ ॥
पुरैव पुंसा अवधृतो धराज्वरो
    भवद्‌भिः अंशैः यदुषूपजन्यताम् ।
स यावद् उर्व्या भरं इश्वरेश्वरः
    स्वकालशक्त्या क्षपयन् चरेद् भुवि ॥ २२ ॥
( अनुष्टुप् )
वसुदेवगृहे साक्षाद् भगवान् पुरुषः परः ।
जनिष्यते तत्प्रियार्थं संभवन्तु सुरस्त्रियः ॥ २३ ॥
वासुदेवकलानन्तः सहस्रवदनः स्वराट् ।
अग्रतो भविता देवो हरेः प्रियचिकीर्षया ॥ २४ ॥
विष्णोर्माया भगवती यया सम्मोहितं जगत् ।
आदिष्टा प्रभुणांशेन कार्यार्थे संभविष्यति ॥ २५ ॥

श्रीशुक उवाच ।
इत्यादिश्यामरगणान् प्रजापतिपतिः विभुः ।
आश्वास्य च महीं गीर्भिः स्वधाम परमं ययौ ॥ २६ ॥
शूरसेनो यदुपतिः मथुरां आवसन् पुरीम् ।
माथुरान् शूरसेनांश्च विषयान् बुभुजे पुरा ॥ २७ ॥
राजधानी ततः साभूत् सर्वयादव भूभुजाम् ।
मथुरा भगवान् यत्र नित्यं सन्निहितो हरिः ॥ २८ ॥
तस्यां तु कर्हिचित् शौरिः वसुदेवः कृतोद्‌वहः ।
देवक्या सूर्यया सार्धं प्रयाणे रथमारुहत् ॥ २९ ॥
उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया ।
रश्मीन् हयानां जग्राह रौक्मै रथशतैर्वृतः ॥ ३० ॥
चतुःशतं पारिबर्हं गजानां हेममालिनाम् ।
अश्वानां अयुतं सार्धं रथानां च त्रिषट्‌शतम् ॥ ३१ ॥
दासीनां सुकुमारीणां द्वे शते समलंकृते ।
दुहित्रे देवकः प्रादात् याने दुहितृवत्सलः ॥ ३२ ॥
शंखतूर्यमृदंगाश्च नेदुः दुन्दुभयः समम् ।
प्रयाणप्रक्रमे तावत् वरवध्वोः सुमंगलम् ॥ ३३ ॥
पथि प्रग्रहिणं कंसं आभाष्य आह अशरीरवाक् ।

अस्यास्त्वां अष्टमो गर्भो हन्ता यां वहसे अबुध ॥ ३४ ॥
इत्युक्तः स खलः पापो भोजानां कुलपांसनः ।
भगिनीं हन्तुमारब्धः खड्गपाणिः कचेऽग्रहीत् ॥ ३५ ॥
तं जुगुप्सितकर्माणं नृशंसं निरपत्रपम् ।
वसुदेवो महाभाग उवाच परिसान्त्वयन् ॥ ३६ ॥

श्रीवसुदेव उवाच ।
श्लाघनीयगुणः शूरैः भवान् भोज-यशस्करः ।
स कथं भगिनीं हन्यात् स्त्रियं उद्वाहपर्वणि ॥ ३७ ॥
मृत्युर्जन्मवतां वीर देहेन सह जायते ।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ३८ ॥
देहे पञ्चत्वमापन्ने देही कर्मानुगोऽवशः ।
देहान्तरं अनुप्राप्य प्राक्तनं त्यजते वपुः ॥ ३९ ॥
व्रजन् तिष्ठन् पदैकेन यथैवैकेन गच्छति ।
यथा तृणजलूकैवं देही कर्मगतिं गतः ॥ ४० ॥
( इंद्रवंशा )
स्वप्ने यथा पश्यति देहमीदृशं
मनोरथेन अभिनिविष्टचेतनः ।
दृष्टश्रुताभ्यां मनसानुचिन्तयन्
प्रपद्यते तत् किमपि ह्यपस्मृतिः ॥ ४१ ॥
यतो यतो धावति दैवचोदितं
मनो विकारात्मकमाप पञ्चसु ।
गुणेषु मायारचितेषु देह्यसौ
प्रपद्यमानः सह तेन जायते ॥ ४२ ॥
ज्योतिर्यथैव उदकपार्थिवेष्वदः ।
समीरवेगानुगतं विभाव्यते ।
एवं स्वमायारचितेष्वसौ पुमान् ।
गुणेषु रागानुगतो विमुह्यति ॥ ४३ ॥
( अनुष्टुप् )
तस्मात् न कस्यचिद् द्रोहं आचरेत् स तथाविधः ।
आत्मनः क्षेममन्विच्छन् द्रोग्धुर्वै परतो भयम् ॥ ४४ ॥
एषा तव अनुजा बाला कृपणा पुत्रिकोपमा ।
हन्तुं नार्हसि कल्याणीं इमां त्वं दीनवत्सलः ॥ ४५ ॥

श्रीशुक उवाच ।
एवं स सामभिर्भेदैः बोध्यमानोऽपि दारुणः ।
न न्यवर्तत कौरव्य पुरुषादान् अनुव्रतः ॥ ४६ ॥
निर्बन्धं तस्य तं ज्ञात्वा विचिन्त्यानकदुन्दुभिः ।
प्राप्तं कालं प्रतिव्योढुं इदं तत्रान्वपद्यत ॥ ४७ ॥
मृत्युर्बुद्धिमतापोह्यो यावद्बुद्धिबलोदयम् ।
यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः ॥ ४८ ॥
प्रदाय मृत्यवे पुत्रान् मोचये कृपणां इमाम् ।
सुता मे यदि जायेरन् मृत्युर्वा न म्रियेत चेत् ॥ ४९ ॥
विपर्ययो वा किं न स्याद् गतिर्धातुः दुरत्यया ।
उपस्थितो निवर्तेत निवृत्तः पुनरापतेत् ॥ ५० ॥
( मिश्र )
अग्नेर्यथा दारुवियोगयोगयोः
अदृष्टतोऽन्यन्न निमित्तमस्ति ।
एवं हि जन्तोरपि दुर्विभाव्यः
शरीर संयोगवियोगहेतुः ॥ ५१ ॥
( अनुष्टुप् )
एवं विमृश्य तं पापं यावद् आत्मनिदर्शनम् ।
पूजयामास वै शौरिः बहुमानपुरःसरम् ॥ ५२ ॥
प्रसन्न वदनाम्भोजो नृशंसं निरपत्रपम् ।
मनसा दूयमानेन विहसन् इदमब्रवीत् ॥ ५३ ॥

श्रीवसुदेव उवाच ।
न ह्यस्यास्ते भयं सौम्य यद् वाक् आहाशरीरिणी ।
पुत्रान् समर्पयिष्येऽस्या यतस्ते भयमुत्थितम् ॥ ५४ ॥

श्रीशुक उवाच ।
स्वसुर्वधात् निववृते कंसः तद्वाक्यसारवित् ।
वसुदेवोऽपि तं प्रीतः प्रशस्य प्राविशद् गृहम् ॥ ५५ ॥
अथ काल उपावृत्ते देवकी सर्वदेवता ।
पुत्रान् प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम् ॥ ५६ ॥
कीर्तिमन्तं प्रथमजं कंसायानकदुन्दुभिः ।
अर्पयामास कृच्छ्रेण सोऽनृताद् अतिविह्वलः ॥ ५७ ॥
किं दुःसहं नु साधूनां विदुषां किं अपेक्षितम् ।

किं अकार्यं कदर्याणां दुस्त्यजं किं धृतात्मनाम् ॥ ५८ ॥
दृष्ट्वा समत्वं तत् शौरेः सत्ये चैव व्यवस्थितिम् ।
कंसस्तुष्टमना राजन् प्रहसन् इदमब्रवीत् ॥ ५९ ॥
प्रतियातु कुमारोऽयं न ह्यस्मादस्ति मे भयम् ।
अष्टमाद् युवयोर्गर्भान् मृत्युर्मे विहितः किल ॥ ६० ॥
तथेति सुतमादाय ययौ आनकदुन्दुभिः ।
नाभ्यनन्दत तद्वाक्यं असतोऽविजितात्मनः ॥ ६१ ॥
नन्दाद्या ये व्रजे गोपा याश्चामीषां च योषितः ।
वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ॥ ६२ ॥
सर्वे वै देवताप्राया उभयोरपि भारत ।
ज्ञातयो बन्धुसुहृदो ये च कंसं अनुव्रताः ॥ ६३ ॥
एतत् कंसाय भगवान् शशंसाभ्येत्य नारदः ।
भूमेर्भारायमाणानां दैत्यानां च वधोद्यमम् ॥ ६४ ॥
ऋषेः विनिर्गमे कंसो यदून् मत्वा सुरान् इति ।
देवक्या गर्भसंभूतं विष्णुं च स्ववधं प्रति ॥ ६५ ॥
देवकीं वसुदेवं च निगृह्य निगडैर्गृहे ।
जातं जातं अहन् पुत्रं तयोः अजनशंकया ॥ ६६ ॥
मातरं पितरं भ्रातॄन् सर्वांश्च सुहृदस्तथा ।
घ्नन्ति ह्यसुतृपो लुब्धा राजानः प्रायशो भुवि ॥ ६७ ॥
आत्मानं इह सञ्जातं जानन् प्राग् विष्णुना हतम् ।
महासुरं कालनेमिं यदुभिः स व्यरुध्यत ॥ ६८ ॥
उग्रसेनं च पितरं यदुभोजान्धकाधिपम् ।
स्वयं निगृह्य बुभुजे शूरसेनान् महाबलः ॥ ६९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां दशमस्कन्धे पूर्वार्धे प्रथमोध्याऽयः ॥ १ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

अथ द्वितीयोऽध्यायः

श्रीशुक उवाच

प्रलम्बबकचाणूर तृणावर्तमहाशनैः

मुष्टिकारिष्टद्विविद पूतनाकेशीधेनुकैः १

अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्युतः

यदूनां कदनं चक्रे बली मागधसंश्रयः २

ते पीडिता निविविशुः कुरुपञ्चालकेकयान्

शाल्वान्विदर्भान्निषधान्विदेहान्कोशलानपि ३

एके तमनुरुन्धाना ज्ञातयः पर्युपासते

हतेषु षट्सु बालेषु देवक्या औग्रसेनिना ४

सप्तमो वैष्णवं धाम यमनन्तं प्रचक्षते

गर्भो बभूव देवक्या हर्षशोकविवर्धनः ५

भगवानपि विश्वात्मा विदित्वा कंसजं भयम्

यदूनां निजनाथानां योगमायां समादिशत् ६

गच्छ देवि व्रजं भद्रे गोपगोभिरलङ्कृतम्

रोहिणी वसुदेवस्य भार्यास्ते नन्दगोकुले

अन्याश्च कंससंविग्ना विवरेषु वसन्ति हि ७

देवक्या जठरे गर्भं शेषाख्यं धाम मामकम्

तत्सन्निकृष्य रोहिण्या उदरे सन्निवेशय ८

अथाहमंशभागेन देवक्याः पुत्रतां शुभे

प्राप्स्यामि त्वं यशोदायां नन्दपत्न्यां भविष्यसि ९

अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम्

धूपोपहारबलिभिः सर्वकामवरप्रदाम् १०

नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि

दुर्गेति भद्र कालीति विजया वैष्णवीति च ११

कुमुदा चण्डिका कृष्णा माधवी कन्यकेति च

माया नारायणीशानी शारदेत्यम्बिकेति च १२

गर्भसङ्कर्षणात्तं वै प्राहुः सङ्कर्षणं भुवि

रामेति लोकरमणाद्बलभद्रं बलोच्छ्रयात् १३

सन्दिष्टैवं भगवता तथेत्योमिति तद्वचः

प्रतिगृह्य परिक्रम्य गां गता तत्तथाकरोत् १४

गर्भे प्रणीते देवक्या रोहिणीं योगनिद्र या

अहो विस्रंसितो गर्भ इति पौरा विचुक्रुशुः १५

भगवानपि विश्वात्मा भक्तानामभयङ्करः
आविवेशांशभागेन मन आनकदुन्दुभेः १६
स बिभ्रत्पौरुषं धाम भ्राजमानो यथा रविः
दुरासदोऽतिदुर्धर्षो भूतानां सम्बभूव ह १७
ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी
दधार सर्वात्मकमात्मभूतं काष्ठा यथानन्दकरं मनस्तः १८
सा देवकी सर्वजगन्निवास निवासभूता नितरां न रेजे
भोजेन्द्र गेहेऽग्निशिखेव रुद्धा सरस्वती ज्ञानखले यथा सती १९
तां वीक्ष्य कंसः प्रभयाजितान्तरां
विरोचयन्तीं भवनं शुचिस्मिताम्
आहैष मे प्राणहरो हरिर्गुहां
ध्रुवं श्रितो यन्न पुरेयमीदृशी २०
किमद्य तस्मिन्करणीयमाशु मे यदर्थतन्त्रो न विहन्ति विक्रमम्
स्त्रियाः स्वसुर्गुरुमत्या वधोऽयं यशः श्रियं हन्त्यनुकालमायुः २१
स एष जीवन्खलु सम्परेतो वर्तेत योऽत्यन्तनृशंसितेन
देहे मृते तं मनुजाः शपन्ति गन्ता तमोऽन्धं तनुमानिनो ध्रुवम् २२
इति घोरतमाद्भावात्सन्निवृत्तः स्वयं प्रभुः
आस्ते प्रतीक्षंस्तज्जन्म हरेर्वैरानुबन्धकृत् २३
आसीनः संविशंस्तिष्ठन्भुञ्जानः पर्यटन्महीम्
चिन्तयानो हृषीकेशमपश्यत्तन्मयं जगत् २४
ब्रह्मा भवश्च तत्रैत्य मुनिभिर्नारदादिभिः
देवैः सानुचरैः साकं गीर्भिर्वृषणमैडयन् २५
सत्यव्रतं सत्यपरं त्रिसत्यं
सत्यस्य योनिं निहितं च सत्ये
सत्यस्य सत्यमृतसत्यनेत्रं
सत्यात्मकं त्वां शरणं प्रपन्नाः २६
एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चविधः षडात्मा
सप्तत्वगष्टविटपो नवाक्षो दशच्छदी द्विखगो ह्यादिवृक्षः २७
त्वमेक एवास्य सतः प्रसूतिस्त्वं सन्निधानं त्वमनुग्रहश्च
त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये २८
बिभर्षि रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराचरस्य
सत्त्वोपपन्नानि सुखावहानि सतामभद्रा णि मुहुः खलानाम् २९
त्वय्यम्बुजाक्षाखिलसत्त्वधाम्नि समाधिनावेशितचेतसैके

त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम् ३०
स्वयं समुत्तीर्य सुदुस्तरं द्युमन्
भवार्णवं भीममदभ्रसौहृदाः
भवत्पदाम्भोरुहनावमत्र ते
निधाय याताः सदनुग्रहो भवान् ३१
येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्
त्वय्यस्तभावादविशुद्धबुद्धयः
आरुह्य कृच्छ्रेण परं पदं ततः
पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ३२
तथा न ते माधव तावकाः क्वचिद्भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः
त्वयाभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो ३३
सत्त्वं विशुद्धं श्रयते भवान्स्थितौ
शरीरिणां श्रेयौपायनं वपुः
वेदक्रियायोगतपःसमाधिभिस्
तवार्हणं येन जनः समीहते ३४
सत्त्वं न चेद्धातरिदं निजं भवेद्
विज्ञानमज्ञानभिदापमार्जनम्
गुणप्रकाशैरनुमीयते भवान्
प्रकाशते यस्य च येन वा गुणः ३५
न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य साक्षिणः
मनोवचोभ्यामनुमेयवर्त्मनो देव क्रियायां प्रतियन्त्यथापि हि ३६
शृण्वन्गृणन्संस्मरयंश्च चिन्तयन्
नामानि रूपाणि च मङ्गलानि ते
क्रियासु यस्त्वच्चरणारविन्दयोर्
आविष्टचेता न भवाय कल्पते ३७
दिष्ट्या हरेऽस्या भवतः पदो भुवो
भारोऽपनीतस्तव जन्मनेशितुः
दिष्ट्याङ्कितां त्वत्पदकैः सुशोभनैर्
द्र क्ष्याम गां द्यां च तवानुकम्पिताम् ३८
न तेऽभवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे
भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभयाश्रयात्मनि ३९
मत्स्याश्वकच्छपनृसिंहवराहहंस
राजन्यविप्रविबुधेषु कृतावतारः

त्वं पासि नस्त्रिभुवनं च यथाधुनेश
भारं भुवो हर यदूत्तम वन्दनं ते ४०
दिष्ट्याम्ब ते कुक्षिगतः परः पुमान्
अंशेन साक्षाद्भगवान्भवाय नः
माभूद्भयं भोजपतेर्मुमूर्षोर्
गोप्ता यदूनां भविता तवात्मजः ४१
श्रीशुक उवाच
इत्यभिष्टूय पुरुषं यद्रूपमनिदं यथा
ब्रह्मेशानौ पुरोधाय देवाः प्रतिययुर्दिवम् ४२

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे गर्भगतिविष्णोर्ब्रह्मादिकृतस्तुतिर्नाम द्वितीयोऽध्यायः

श्रीशुक उवाच ।

अथ सर्वगुणोपेतः कालः परमशोभनः ।
यर्हि एव अजनजन्मर्क्षं शान्तर्क्ष-ग्रहतारकम् ॥ १ ॥
दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम् ।
मही मंगलभूयिष्ठ पुरग्राम-व्रजाकरा ॥ २ ॥
नद्यः प्रसन्नसलिला ह्रदा जलरुहश्रियः ।
द्विजालिकुल सन्नाद स्तबका वनराजयः ॥ ३ ॥
ववौ वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः ।
अग्नयश्च द्विजातीनां शान्तास्तत्र समिन्धत ॥ ४ ॥
मनांस्यासन् प्रसन्नानि साधूनां असुरद्रुहाम् ।
जायमानेऽजने तस्मिन् नेदुर्दुन्दुभयो दिवि ॥ ५ ॥
जगुः किन्नरगन्धर्वाः तुष्टुवुः सिद्धचारणाः ।
विद्याधर्यश्च ननृतुः अप्सरोभिः समं तदा ॥ ६ ॥
मुमुचुर्मुनयो देवाः सुमनांसि मुदान्विताः ।
मन्दं मन्दं जलधरा जगर्जुः अनुसागरम् ॥ ७ ॥
निशीथे तम उद्भूते जायमाने जनार्दने ।
देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः ।
आविरासीद् यथा प्राच्यां दिशि इन्दुरिव पुष्कलः ॥ ८ ॥

तमद्भुतं बालकमम्बुजेक्षणं
    चतुर्भुजं शंखगदार्युदायुधम् ।
श्रीवत्सलक्ष्मं गलशोभि कौस्तुभं
    पीताम्बरं सान्द्रपयोदसौभगम् ॥ ९ ॥
महार्हवैदूर्यकिरीटकुण्डल
    त्विषा परिष्वक्त सहस्रकुन्तलम् ।
उद्दाम काञ्च्यङ्गद कङ्कणादिभिः
    विरोचमानं वसुदेव ऐक्षत ॥ १० ॥
स विस्मयोत्फुल्ल विलोचनो हरिं
    सुतं विलोक्यानकदुन्दुभिस्तदा ।
कृष्णावतारोत्सव संभ्रमोऽस्पृशन्
    मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम् ॥ ११ ॥
अथैनमस्तौदवधार्य पूरुषं
    परं नताङ्गः कृतधीः कृताञ्जलिः ।

स्वरोचिषा भारत सूतिकागृहं
    विरोचयन्तं गतभीः प्रभाववित् ॥ १२ ॥

श्रीवसुदेव उवाच ।

विदितोऽसि भवान् साक्षात् पुरुषः प्रकृतेः परः ।
केवलानुभवानन्द स्वरूपः सर्वबुद्धिदृक् ॥ १३ ॥
स एव स्वप्रकृत्येदं सृष्ट्वाग्रे त्रिगुणात्मकम् ।
तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे ॥ १४ ॥
यथा इमे अविकृता भावाः तथा ते विकृतैः सह ।
नानावीर्याः पृथग्भूता विराजं जनयन्ति हि ॥ १५ ॥
सन्निपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव ।
प्रागेव विद्यमानत्वात् न तेषां इह संभवः ॥ १६ ॥

एवं भवान् बुद्ध्यनुमेयलक्षणैः
    ग्राह्यैर्गुणैः सन्नपि तद्गुणाग्रहः ।
अनावृतत्वाद् बहिरन्तरं न ते
    सर्वस्य सर्वात्मन आत्मवस्तुनः ॥ १७ ॥
य आत्मनो दृश्यगुणेषु सन्निति
    व्यवस्यते स्व-व्यतिरेकतोऽबुधः ।
विनानुवादं न च तन्मनीषितं
    सम्यग् यतस्त्यक्तमुपाददत् पुमान् ॥ १८ ॥
त्वत्तोऽस्य जन्मस्थिति संयमान् विभो
    वदन्ति अनीहात् अगुणाद् अविक्रियात् ।
त्वयीश्वरे ब्रह्मणि नो विरुध्यते
    त्वद् आश्रयत्वाद् उपचर्यते गुणैः ॥ १९ ॥
स त्वं त्रिलोकस्थितये स्वमायया
    बिभर्षि शुक्लं खलु वर्णमात्मनः ।
सर्गाय रक्तं रजसोपबृंहितं
    कृष्णं च वर्णं तमसा जनात्यये ॥ २० ॥
त्वमस्य लोकस्य विभो रिरक्षिषुः
    गृहेऽवतीर्णोऽसि ममाखिलेश्वर ।
राजन्य संज्ञासुरकोटि यूथपैः
    निर्व्यूह्यमाना निहनिष्यसे चमूः ॥ २१ ॥

अयं त्वसभ्यस्तव जन्म नौ गृहे
    श्रुत्वाग्रजांस्ते न्यवधीत् सुरेश्वर ।
स तेऽवतारं पुरुषैः समर्पितं
    श्रुत्वाधुनैव अभिसरत्युदायुधः ॥ २२ ॥

श्रीशुक उवाच ।

अथैनं आत्मजं वीक्ष्य महापुरुष लक्षणम् ।
देवकी तं उपाधावत् कंसाद् भीता सुचिस्मिता ॥ २३ ॥

श्रीदेवक्युवाच ।

रूपं यत् तत् प्राहुरव्यक्तमाद्यं
    ब्रह्म ज्योतिर्निर्गुणं निर्विकारम् ।
सत्तामात्रं निर्विशेषं निरीहं
    स त्वं साक्षात् विष्णुरध्यात्मदीपः ॥ २४ ॥
नष्टे लोके द्विपरार्धावसाने
    महाभूतेषु आदिभूतं गतेषु ।
व्यक्ते अव्यक्तं कालवेगेन याते
    भवान् एकः शिष्यते शेषसंज्ञः ॥ २५ ॥
योऽयं कालस्तस्य तेऽव्यक्तबन्धो
    चेष्टां आहुः चेष्टते येन विश्वम् ।
निमेषादिः वत्सरान्तो महीयान्
    तं त्वेशानं क्षेमधाम प्रपद्ये ॥ २६ ॥
मर्त्यो मृत्युव्यालभीतः पलायन्
    लोकान् सर्वान् निर्भयं नाध्यगच्छत् ।
त्वत्पादाब्जं प्राप्य यदृच्छयाद्य
    स्वस्थः शेते मृत्युरस्मादपैति ॥ २७ ॥
स त्वं घोरात् उग्रसेनात्मजात् नः
    त्राहि त्रस्तान् भृत्यवित्रासहासि ।
रूपं चेदं पौरुषं ध्यानधिष्ण्यं
    मा प्रत्यक्षं मांसदृशां कृषीष्ठाः ॥ २८ ॥

जन्म ते मय्यसौ पापो मा विद्यात् मधुसूदन ।
समुद्विजे भवद्धेतोः कंसाद् अहमधीरधीः ॥ २९ ॥

उपसंहर विश्वात्मन् अदो रूपं अलौकिकम् ।
शंखचक्रगदापद्म श्रिया जुष्टं चतुर्भुजम् ॥ ३० ॥

विश्वं यदेतत् स्वतनौ निशान्ते
 यथावकाशं पुरुषः परो भवान् ।
बिभर्ति सोऽयं मम गर्भगो अभूद्
 अहो नृलोकस्य विडंबनं हि तत् ॥ ३१ ॥

श्रीभगवानुवाच ।

त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायंभुवे सति ।
तदायं सुतपा नाम प्रजापतिः अकल्मषः ॥ ३२ ॥
युवां वै ब्रह्मणाऽऽदिष्टौ प्रजासर्गे यदा ततः ।
सन्नियम्येन्द्रियग्रामं तेपाथे परमं तपः ॥ ३३ ॥
वर्षवाता-तप-हिम घर्मकालगुणाननु ।
सहमानौ श्वासरोध विनिर्धूत-मनोमलौ ॥ ३४ ॥
शीर्णपर्णा-निलाहारौ उपशान्तेन चेतसा ।
मत्तः कामान् अभीप्सन्तौ मद् आराधनमीहतुः ॥ ३५ ॥
एवं वां तप्यतोस्तीव्रं तपः परमदुष्करम् ।
दिव्यवर्षसहस्राणि द्वादशेयुः मदात्मनोः ॥ ३६ ॥
तदा वां परितुष्टोऽहं अमुना वपुषानघे ।
तपसा श्रद्धया नित्यं भक्त्या च हृदि भावितः ॥ ३७ ॥
प्रादुरासं वरदराड् युवयोः कामदित्सया ।
व्रियतां वर इत्युक्ते माद्दशो वां वृतः सुतः ॥ ३८ ॥
अजुष्टग्राम्यविषयौ अनपत्यौ च दम्पती ।
न वव्राथेऽपवर्गं मे मोहितौ देवमायया ॥ ३९ ॥
गते मयि युवां लब्ध्वा वरं मत्सद्दशं सुतम् ।
ग्राम्यान् भोगान् अभुञ्जाथां युवां प्राप्तमनोरथौ ॥ ४० ॥
अद्दष्ट्वान्यतमं लोके शीलौदार्यगुणैः समम् ।
अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः ॥ ४१ ॥
तयोर्वां पुनरेवाहं अदित्यामास कश्यपात् ।
उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः ॥ ४२ ॥
तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषाथ वाम् ।
जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति ॥ ४३ ॥

एतद् वां दर्शितं रूपं प्राग्जन्म स्मरणाय मे ।
नान्यथा मद्भवं ज्ञानं मर्त्यलिङ्गेन जायते ॥ ४४ ॥
युवां मां पुत्रभावेन ब्रह्मभावेन चासकृत् ।
चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं पराम् ॥ ४५ ॥

श्रीशुक उवाच ।
इत्युक्त्वासीत् हरिः तूष्णीं भगवान् आत्ममायया ।
पित्रोः संपश्यतोः सद्यो बभूव प्राकृतः शिशुः ॥ ४६ ॥

ततश्च शौरिः भगवत्प्रचोदितः
    सुतं समादाय स सूतिकागृहात् ।
यदा बहिर्गन्तुमियेष तर्ह्यजा
    या योगमायाजनि नन्दजायया ॥ ४७ ॥
तया हृतप्रत्यय सर्ववृत्तिषु
    द्वाःस्थेषु पौरेष्वपि शायितेष्वथ ।
द्वारस्तु सर्वाः पिहिता दुरत्यया
    बृहत् कपाटायस कीलश्रृंखलैः ॥ ४८ ॥
ताः कृष्णवाहे वसुदेव आगते
    स्वयं व्यवर्यन्त यथा तमो रवेः ।
ववर्ष पर्जन्य उपांशुगर्जितः
    शेषोऽन्वगाद् वारि निवारयन् फणैः ॥ ४९ ॥
मघोनि वर्षत्यसकृत् यमानुजा
    गंभीर तोयौघ जवोर्मि फेनिला ।
भयानकावर्त शताकुला नदी
    मार्गं ददौ सिन्धुरिव श्रियः पतेः ॥ ५० ॥
नन्दव्रजं शौरिरुपेत्य तत्र तान्
    गोपान् प्रसुप्तान् उपलभ्य निद्रया ।
सुतं यशोदाशयने निधाय तत्
    सुतां उपादाय पुनर्गृहान् अगात् ॥ ५१ ॥

देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम् ।
प्रतिमुच्य पदोर्लोहं आस्ते पूर्ववदावृतः ॥ ५२ ॥
यशोदा नन्दपत्नी च जातं परमबुध्यत ।
न तल्लिङ्गं परिश्रान्ता निद्रयापगतस्मृतिः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे कृष्णजन्मनि तृतीयोध्याऽयः ॥ ३ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

जिघांसोः कंसस्य हस्तात् उन्मुक्ताया देव्या भगवद्
अवतार सूचनं कंसानुतापः,तदीय दुर्मंत्रिणां दुर्मंत्रणं च -

श्रीशुक उवाच ।
( अनुष्टुप् )
बहिरन्तःपुरद्वारः सर्वाः पूर्ववदावृताः ।
ततो बालध्वनिं श्रुत्वा गृहपालाः समुत्थिताः ॥ १ ॥
ते तु तूर्णं उपव्रज्य देवक्या गर्भजन्म तत् ।
आचख्युः भोजराजाय यदुद्विग्नः प्रतीक्षते ॥ २ ॥
स तल्पात् तूर्णमुत्थाय कालोऽयमिति विह्वलः ।
सूतीगृहं अगात् तूर्णं प्रस्खलन् मुक्तमूर्धजः ॥ ३ ॥
तं आह भ्रातरं देवी कृपणा करुणं सती ।
स्नुषेयं तव कल्याण स्त्रियं मा हन्तुमर्हसि ॥ ४ ॥
बहवो हिंसिता भ्रातः शिशवः पावकोपमाः ।
त्वया दैवनिसृष्टेन पुत्रिकैका प्रदीयताम् ॥ ५ ॥
नन्वहं ते ह्यवरजा दीना हतसुता प्रभो ।
दातुमर्हसि मन्दाया अङ्गेमां चरमां प्रजाम् ॥ ६ ॥
श्रीशुक उवाच ।
उपगुह्य आत्मजां एवं रुदत्या दीन अदीनवत् ।
याचितस्तां विनिर्भर्त्स्य हस्ताद् आचिच्छिदे खलः ॥ ७ ॥
तां गृहीत्वा चरणयोः जातमात्रां स्वसुः सुताम् ।
अपोथयत् शिलापृष्ठे स्वार्थोन्मूलितसौहृदः ॥ ८ ॥
सा तद्हस्तात् समुत्पत्य सद्यो देव्यंबरं गता ।
अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा ॥ ९ ॥
दिव्यस्रग् अंबरालेप रत्नाभरणभूषिता ।
धनुःशूलेषुचर्मासि शंखचक्रगदाधरा ॥ १० ॥
सिद्धचारणगन्धर्वैः अप्सरःकिन्नरोरगैः ।
उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत् ॥ ११ ॥
किं मया हतया मन्द जातः खलु तवान्तकृत् ।
यत्र क्व वा पूर्वशत्रुः मा हिंसीः कृपणान्वृथा ॥ १२ ॥
इति प्रभाष्य तं देवी माया भगवती भुवि ।
बहुनामनिकेतेषु बहुनामा बभूव ह ॥ १३ ॥
तया अभिहितं आकर्ण्य कंसः परमविस्मितः ।

देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत् ॥ १४ ॥
अहो भगिन्यहो भाम मया वां बत पाप्मना ।
पुरुषाद इवापत्यं बहवो हिंसिताः सुताः ॥ १५ ॥
स त्वहं त्यक्तकारुण्यः त्यक्तज्ञातिसुहृत् खलः ।
कान् लोकान् वै गमिष्यामि ब्रह्महेव मृतः श्वसन् ॥ १६ ॥
दैवं अपि अनृतं वक्ति न मर्त्या एव केवलम् ।
यद् विश्रंभाद् अहं पापः स्वसुर्निहतवान् शिशून् ॥ १७ ॥
मा शोचतं महाभागौ आत्मजान् स्वकृतंभुजः ।
जन्तवो न सदैकत्र दैवाधीनास्तदाऽऽसते ॥ १८ ॥
भुवि भौमानि भूतानि यथा यान्ति अपयान्ति च ।
नायमात्मा तथैतेषु विपर्येति यथैव भूः ॥ १९ ॥
यथानेवंविदो भेदो यत आत्मविपर्ययः ।
देहयोगवियोगौ च संसृतिर्न निवर्तते ॥ २० ॥
तस्माद्भद्रे स्वतनयान् मया व्यापादितानपि ।
मानुशोच यतः सर्वः स्वकृतं विन्दतेऽवशः ॥ २१ ॥
यावद्धतोऽस्मि हन्तास्मीति आत्मानं मन्यतेऽस्वदृक् ।
तावत् तद् अभिमान्यज्ञो बाध्यबाधकतामियात् ॥ २२ ॥
क्षमध्वं मम दौरात्म्यं साधवो दीनवत्सलाः ।
इत्युक्त्वाश्रुमुखः पादौ श्यालः स्वस्रोः अथाग्रहीत् ॥ २३ ॥
मोचयामास निगडात् विश्रब्धः कन्यकागिरा ।
देवकीं वसुदेवं च दर्शयन् आत्मसौहृदम् ॥ २४ ॥
भ्रातुः समनुतप्तस्य क्षान्त्वा रोषं च देवकी ।
व्यसृजत् वसुदेवश्च प्रहस्य तमुवाच ह ॥ २५ ॥
एवमेतन्महाभाग यथा वदसि देहिनाम् ।
अज्ञानप्रभवाहंधीः स्वपरेति भिदा यतः ॥ २६ ॥
शोकहर्षभयद्वेष लोभमोहमदान्विताः ।
मिथो घ्नन्तं न पश्यन्ति भावैर्भावं पृथग्दृशः ॥ २७ ॥
श्रीशुक उवाच ।
कंस एवं प्रसन्नाभ्यां विशुद्धं प्रतिभाषितः ।
देवकी वसुदेवाभ्यां अनुज्ञातो आविशत् गृहम् ॥ २८ ॥
तस्यां रात्र्यां व्यतीतायां कंस आहूय मंत्रिणः ।
तेभ्य आचष्ट तत् सर्वं यदुक्तं योगनिद्रया ॥ २९ ॥
आकर्ण्य भर्तुर्गदितं तं ऊचुः देवशत्रवः ।

देवान् प्रति कृतामर्षा दैतेया नातिकोविदाः ॥ ३० ॥
एवं चेत्तर्हि भोजेन्द्र पुरग्राम व्रजादिषु ।
अनिर्दशान् निर्दशांश्च हनिष्यामोऽद्य वै शिशून् ॥ ३१ ॥
किं उद्यमैः करिष्यन्ति देवाः समरभीरवः ।
नित्यं उद्विग्नमनसो ज्याघोषैर्धनुषस्तव ॥ ३२ ॥
अस्यतस्ते शरव्रातैः हन्यमानाः समन्ततः ।
जिजीविषव उत्सृज्य पलायनपरा ययुः ॥ ३३ ॥
केचित् प्राञ्जलयो दीना न्यस्तशस्त्रा दिवौकसः ।
मुक्तकच्छशिखाः केचिद् भीताः स्म इति वादिनः ॥ ३४ ॥
न त्वं विस्मृतशस्त्रास्त्रान् विरथान् भयसंवृतान् ।
हंस्यन्यासक्तविमुखान् भग्नचापानयुध्यतः ॥ ३५ ॥
किं क्षेमशूरैर्विबुधैः असंयुगविकत्थनैः ।
रहोजुषा किं हरिणा शंभुना वा वनौकसा ।
किं इंद्रेणाल्पवीर्येण ब्रह्मणा वा तपस्यता ॥ ३६ ॥
तथापि देवाः सापत्न्यान् नोपेक्ष्या इति मन्महे ।
ततः तन्मूलखनने नियुंक्ष्वास्मान् अनुव्रतान् ॥ ३७ ॥
( वंशस्थ )
यथामयोंऽगे समुपेक्षितो नृभिः
न शक्यते रूढपदश्चिकित्सितुम् ।
यथेन्द्रियग्राम उपेक्षितस्तथा
रिपुर्महान् बद्धबलो न चाल्यते ॥ ३८ ॥
( अनुष्टुप् )
मूलं हि विष्णुः देवानां यत्र धर्मः सनातनः ।
तस्य च ब्रह्मगोविप्राः तपो यज्ञाः सदक्षिणाः ॥ ३९ ॥
तस्मात्सर्वात्मना राजन् ब्राह्मणान् ब्रह्मवादिनः ।
तपस्विनो यज्ञशीलान् गाश्च हन्मो हविर्दुघाः ॥ ४० ॥
विप्रा गावश्च वेदाश्च तपः सत्यं दमः शमः ।
श्रद्धा दया तितिक्षा च क्रतवश्च हरेस्तनूः ॥ ४१ ॥
स हि सर्वसुराध्यक्षो ह्यसुरद्विड् गुहाशयः ।
तन्मूला देवताः सर्वाः सेश्वराः सचतुर्मुखाः ।
अयं वै तद्वधोपायो यद्‍ऋषीणां विहिंसनम् ॥ ४२ ॥
श्रीशुक उवाच ।
एवं दुर्मंत्रिभिः कंसः सह सम्मन्त्र्य दुर्मतिः ।

ब्रह्महिंसां हितं मेने कालपाशावृतोऽसुरः ॥ ४३ ॥
सन्दिश्य साधुलोकस्य कदने कदनप्रियान् ।
कामरूपधरान् दिक्षु दानवान् गृहमाविशत् ॥ ४४ ॥
ते वै रजःप्रकृतयः तमसा मूढचेतसः ।
सतां विद्वेषमाचेरुः आरात् आगतमृत्यवः ॥ ४५ ॥
आयुः श्रियं यशो धर्मं लोकानाशिष एव च ।
हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां दशमस्कन्धे पूर्वार्धे चतुर्थोऽध्यायः ॥ ४ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

गोकुले भगवतो जातकर्मादि महोत्सवः,
नन्दस्य मथुरागमनं, तत्र नन्दवसुदेवसंवादः -

( अनुष्टुप् )
श्रीशुक उवाच ।
नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः ।
आहूय विप्रान् वेदज्ञान् स्नातः शुचिरलंकृतः ॥ १ ॥
वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्य वै ।
कारयामास विधिवत् पितृदेवार्चनं तथा ॥ २ ॥
धेनूनां नियुते प्रादाद् विप्रेभ्यः समलंकृते ।
तिलाद्रीन् सप्त रत्नौघ शातकौंभांबरावृतान् ॥ ३ ॥
कालेन स्नानशौचाभ्यां संस्कारैः तपसेज्यया ।
शुध्यन्ति दानैः सन्तुष्ट्या द्रव्याण्यात्माऽऽत्मविद्यया ॥ ४ ॥
सौमंगल्यगिरो विप्राः सूतमागधवन्दिनः ।
गायकाश्च जगुर्नेदुः भेर्यो दुन्दुभयो मुहुः ॥ ५ ॥
व्रजः सम्मृष्टसंसिक्त द्वाराजिरगृहान्तरः ।
चित्रध्वज पताकास्रक् चैलपल्लवतोरणैः ॥ ६ ॥
गावो वृषा वत्सतरा हरिद्रातैलरूषिताः ।
विचित्र धातुबर्हस्रग् वस्त्रकाञ्चनमालिनः ॥ ७ ॥
महार्हवस्त्राभरण कञ्चुकोष्णीषभूषिताः ।
गोपाः समाययू राजन् नानोपायनपाणयः ॥ ८ ॥
गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्‌भवम् ।
आत्मानं भूषयां चक्रुः वस्त्राकल्पाञ्जनादिभिः ॥ ९ ॥
नवकुंकुमकिञ्जल्क मुखपंकजभूतयः ।
बलिभिस्त्वरितं जग्मुः पृथुश्रोण्यश्चलत्कुचाः ॥ १० ॥
( वसंततिलका )
गोप्यः सुमृष्टमणिकुण्डल निष्ककण्ठ्यः ।
चित्राम्बराः पथि शिखाच्युतमाल्यवर्षाः ।
नन्दालयं सवलया व्रजतीर्विरेजुः
व्यालोलकुण्डल पयोधरहारशोभाः ॥ ११ ॥
( अनुष्टुप् )
ता आशिषः प्रयुञ्जानाः चिरं पाहीति बालके ।
हरिद्राचूर्णतैलाद्‌भिः सिञ्चन्त्यो जनमुज्जगुः ॥ १२ ॥

अवाद्यन्त विचित्राणि वादित्राणि महोत्सवे ।
कृष्णे विश्वेश्वरेऽनन्ते नंदस्य व्रजमागते ॥ १३ ॥
गोपाः परस्परं हृष्टा दधिक्षीरघृतांबुभिः ।
आसिञ्चन्तो विलिंपन्तो नवनीतैश्च चिक्षिपुः ॥ १४ ॥
नन्दो महामनास्तेभ्यो वासोऽलंकारगोधनम् ।
सूतमागधवन्दिभ्यो येऽन्ये विद्योपजीविनः ॥ १५ ॥
तैस्तैः कामैरदीनात्मा यथोचितं अपूजयत् ।
विष्णोराराधनार्थाय स्वपुत्रस्योदयाय च ॥ १६ ॥
रोहिणी च महाभागा नंदगोपाभिनंदिता ।
व्यचरद् दिव्यवासःस्रक् कण्ठाभरणभूषिता ॥ १७ ॥
तत आरभ्य नंदस्य व्रजः सर्वसमृद्धिमान् ।
हरेर्निवासात्मगुणै रमाक्रीडमभून् नृप ॥ १८ ॥
गोपान् गोकुलरक्षायां निरूप्य मथुरां गतः ।
नंदः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह ॥ १९ ॥
वसुदेव उपश्रुत्य भ्रातरं नंदमागतम् ।
ज्ञात्वा दत्तकरं राज्ञे ययौ तद् अवमोचनम् ॥ २० ॥
तं दृष्ट्वा सहसोत्थाय देहः प्राणमिवागतम् ।
प्रीतः प्रियतमं दोर्भ्यां सस्वजे प्रेमविह्वलः ॥ २१ ॥
पूजितः सुखमासीनः पृष्ट्वा अनामयमादृतः ।
प्रसक्तधीः स्वात्मजयोः इदमाह विशांपते ॥ २२ ॥
दिष्ट्या भ्रातः प्रवयस इदानीमप्रजस्य ते ।
प्रजाशाया निवृत्तस्य प्रजा यत् समपद्यत ॥ २३ ॥
दिष्ट्या संसारचक्रेऽस्मिन् वर्तमानः पुनर्भवः ।
उपलब्धो भवानद्य दुर्लभं प्रियदर्शनम् ॥ २४ ॥
नैकत्र प्रियसंवासः सुहृदां चित्रकर्मणाम् ।
ओघेन व्यूह्यमानानां प्लवानां स्रोतसो यथा ॥ २५ ॥
कच्चित् पशव्यं निरुजं भूर्यम्बुतृणवीरुधम् ।
बृहद्वनं तदधुना यत्रास्से त्वं सुहृद्वृतः ॥ २६ ॥
भ्रातर्मम सुतः कच्चित् मात्रा सह भवद्व्रजे ।
तातं भवन्तं मन्वानो भवद्भ्यामुपलालितः ॥ २७ ॥
पुंसस्त्रिवर्गो विहितः सुहृदो ह्यनुभावितः ।
न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते ॥ २८ ॥
श्रीनंद उवाच ।

अहो ते देवकी पुत्राः कंसेन बहवो हताः ।
एकावशिष्टावरजा कन्या सापि दिवं गता ॥ २९ ॥
नूनं ह्यदृष्टनिष्ठोऽयं अदृष्टपरमो जनः ।
अदृष्टमात्मनस्तत्त्वं यो वेद न स मुह्यति ॥ ३० ॥
श्रीवसुदेव उवाच ।
करो वै वार्षिको दत्तो राज्ञे दृष्टा वयं च वः ।
नेह स्थेयं बहुतिथं सन्त्युत्पाताश्च गोकुले ॥ ३१ ॥
श्रीशुक उवाच ।
इति नंदादयो गोपाः प्रोक्तास्ते शौरिणा ययुः ।
अनोभिः अनडुद्युक्तैः तं अनुज्ञाप्य गोकुलम् ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां दशमस्कन्धे पूर्वार्धे पञ्चमोऽध्यायः ॥ ५ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

पूतनावधः -

( अनुष्टुप् )

श्रीशुक उवाच ।

नन्दः पथि वचः शौरेः न मृषेति विचिन्तयन् ।
हरिं जगाम शरणं उत्पातागमशङ्कितः ॥ १ ॥
कंसेन प्रहिता घोरा पूतना बालघातिनी ।
शिशूंश्चचार निघ्नन्ती पुरग्रामव्रजादिषु ॥ २ ॥
न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु ।
कुर्वन्ति सात्वतां भर्तुः यातुधान्यश्च तत्र हि ॥ ३ ॥
सा खेचर्येकदोत्पत्य पूतना नन्दगोकुलम् ।
योषित्वा माययाऽऽत्मानं प्राविशत् कामचारिणी ॥ ४ ॥
तां केशबन्ध व्यतिषक्तमल्लिकां

( मिश्र )

बृहन्नितंब स्तनकृच्छ्रमध्यमाम् ।
सुवाससं कल्पितकर्णभूषण
त्विषोल्लसत् कुन्तलमण्डिताननाम् ॥ ५ ॥
वल्गुस्मितापाङ्ग विसर्गवीक्षितैः
मनो हरन्तीं वनितां व्रजौकसाम् ।
अमंसताम्भोजकरेण रूपिणीं
गोप्यः श्रियं द्रष्टुमिवागतां पतिम् ॥ ६ ॥
बालग्रहस्तत्र विचिन्वती शिशून्
यदृच्छया नन्दगृहेऽसदन्तकम् ।
बालं प्रतिच्छन्ननिजोरुतेजसं
ददर्श तल्पेऽग्निमिवाहितं भसि ॥ ७ ॥
विबुध्य तां बालक मारिकाग्रहं
चराचरात्मा स निमीलितेक्षणः ।
अनन्तमारोपयदङ्कमन्तकं
यथोरगं सुप्तमबुद्धिरज्जुधीः ॥ ८ ॥
तां तीक्ष्णचित्तामतिवामचेष्टितां
वीक्ष्यान्तरा कोषपरिच्छदासिवत् ।
वरस्त्रियं तत्प्रभया च धर्षिते
निरीक्ष्यमाणे जननी ह्यतिष्ठताम् ॥ ९ ॥

तस्मिन् स्तनं दुर्जरवीर्यमुल्बणं ।
घोराङ्कमादाय शिशोर्ददावथ ।
गाढं कराभ्यां भगवान् प्रपीड्य तत्
प्राणैः समं रोषसमन्वितोऽपिबत् ॥ १० ॥
सा मुञ्च मुञ्चालमिति प्रभाषिणी
निष्पीड्य मानाखिलजीवमर्मणि ।
विवृत्य नेत्रे चरणौ भुजौ मुहुः
प्रस्विन्नगात्रा क्षिपती रुरोद ह ॥ ११ ॥
तस्याः स्वनेनातिगभीररंहसा
साद्रिर्मही द्यौश्च चचाल सग्रहा ।
रसा दिशश्च प्रतिनेदिरे जनाः
पेतुः क्षितौ वज्रनिपात शङ्कया ॥ १२ ॥
निशाचरीत्थं व्यथितस्तना व्यसुः
व्यादाय केशांश्चरणौ भुजावपि ।
प्रसार्य गोष्ठे निजरूपमास्थिता
वज्राहतो वृत्र इवापतन्नृप ॥ १३ ॥
( अनुष्टुप् )
पतमानोऽपि तद्देह त्रिगव्यूत्यन्तरद्रुमान् ।
चूर्णयामास राजेन्द्र महदासीत् तदद्भुतम् ॥ १४ ॥
ईषामात्रोग्रदंष्ट्रास्यं गिरिकन्दर नासिकम् ।
गण्डशैलस्तनं रौद्रं प्रकीर्णारुणमूर्धजम् ॥ १५ ॥
अन्धकूपगभीराक्षं पुलिनारोह भीषणम् ।
बद्धसेतुभुजोर्वङ्घ्रि शून्यतोय ह्रदोदरम् ॥ १६ ॥
सन्तत्रसुः स्म तद्वीक्ष्य गोपा गोप्यः कलेवरम् ।
पूर्वं तु तन्निःस्वनित भिन्नहृत्कर्ण मस्तकाः ॥ १७ ॥
बालं च तस्या उरसि क्रीडन्तं अकुतोभयम् ।
गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसंभ्रमाः ॥ १८ ॥
यशोदा रोहिणीभ्यां ताः समं बालस्य सर्वतः ।
रक्षां विदधिरे सम्यक् गोपुच्छभ्रमणादिभिः ॥ १९ ॥
गोमूत्रेण स्नापयित्वा पुनर्गोरजसार्भकम् ।
रक्षां चक्रुश्च शकृता द्वादशाङ्गेषु नामभिः ॥ २० ॥
गोप्यः संस्पृष्टसलिला अङ्गेषु करयोः पृथक् ।
न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत ॥ २१ ॥

( वसंततिलका )

अव्यादजोऽङ्घ्रि मणिमांस्तव जान्वथोरू
    यज्ञोऽच्युतः कटितटं जठरं हयास्यः ।
हृत्केशवस्त्वदुर ईश इनस्तु कण्ठं
    विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ॥ २२ ॥
चक्र्यग्रतः सहगदो हरिरस्तु पश्चात् ।
    त्वत्पार्श्वयोर्धनुरसी मधुहाजनश्च ।
कोणेषु शङ्ख उरुगाय उपर्युपेन्द्रः
    तार्क्ष्यः क्षितौ हलधरः पुरुषः समन्तात् ॥ २३ ॥

( अनुष्टुप् )

इन्द्रियाणि हृषीकेशः प्राणान्नारायणोऽवतु ।
श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ॥ २४ ॥
पृश्निगर्भस्तु ते बुद्धिं आत्मानं भगवान्परः ।
क्रीडन्तं पातु गोविन्दः शयानं पातु माधवः ॥ २५ ॥
व्रजन्तमव्याद् वैकुण्ठ आसीनं त्वां श्रियः पतिः ।
भुञ्जानं यज्ञभुक् पातु सर्वग्रहभयङ्करः ॥ २६ ॥
डाकिन्यो यातुधान्यश्च कुष्माण्डा येऽर्भकग्रहाः ।
भूतप्रेत पिशाचाश्च यक्षरक्षो विनायकाः ॥ २७ ॥
कोटरा रेवती ज्येष्ठा पूतना मातृकादयः ।
उन्मादा ये ह्यपस्मारा देह प्राणेन्द्रियद्रुहः ॥ २८ ॥
स्वप्नदृष्टा महोत्पाता वृद्धा बालग्रहाश्च ये ।
सर्वे नश्यन्तु ते विष्णोः नामग्रहणभीरवः ॥ २९ ॥
श्रीशुक उवाच ।
इति प्रणयबद्धाभिः गोपीभिः कृतरक्षणम् ।
पाययित्वा स्तनं माता संन्यवेशयदात्मजम् ॥ ३० ॥
तावन्नन्दादयो गोपा मथुराया व्रजं गताः ।
विलोक्य पूतनादेहं बभूवुः अतिविस्मिताः ॥ ३१ ॥
नूनं बतर्षिः सञ्जातो योगेशो वा समास सः ।
स एव दृष्टो ह्युत्पातो यद् आहानकदुन्दुभिः ॥ ३२ ॥
कलेवरं परशुभिः छित्त्वा तत्ते व्रजौकसः ।
दूरे क्षिप्त्वावयवशो न्यदहन् काष्ठवेष्टितम् ॥ ३३ ॥
दह्यमानस्य देहस्य धूमश्चागुरुसौरभः ।
उत्थितः कृष्णनिर्भुक्त सपद्याहतपाप्मनः ॥ ३४ ॥

पूतना लोकबालघ्नी राक्षसी रुधिराशना ।
जिघांसयापि हरये स्तनं दत्त्वाप सद्गतिम् ॥ ३५ ॥
किं पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने ।
यच्छन्प्रियतमं किं नु रक्तास्तन्मातरो यथा ॥ ३६ ॥
पद्भ्यां भक्तहृदिस्थाभ्यां वन्द्याभ्यां लोकवन्दितैः ।
अङ्गं यस्याः समाक्रम्य भगवान् अपिबत् स्तनम् ॥ ३७ ॥
यातुधान्यपि सा स्वर्गं अवाप जननीगतिम् ।
कृष्णभुक्तस्तनक्षीराः किमु गावोऽनुमातरः ॥ ३८ ॥
पयांसि यासामपिबत् पुत्रस्नेहस्नुतान्यलम् ।
भगवान् देवकीपुत्रः कैवल्याद्यखिलप्रदः ॥ ३९ ॥
तासामविरतं कृष्णे कुर्वतीनां सुतेक्षणम् ।
न पुनः कल्पते राजन् संसारोऽज्ञानसंभवः ॥ ४० ॥
कटधूमस्य सौरभ्यं अवघ्राय व्रजौकसः ।
किमिदं कुत एवेति वदन्तो व्रजमाययुः ॥ ४१ ॥
ते तत्र वर्णितं गोपैः पूतना गमनादिकम् ।
श्रुत्वा तन्निधनं स्वस्ति शिशोश्चासन् सुविस्मिताः ॥ ४२ ॥
नन्दः स्वपुत्रमादाय प्रेत्यागतमुदारधीः ।
मूर्ध्न्युपाघ्राय परमां मुदं लेभे कुरूद्वह ॥ ४३ ॥
य एतत्पूतनामोक्षं कृष्णस्यार्भकमद्भुतम् ।
श्रृणुयात् श्रद्धया मर्त्यो गोविन्दे लभते रतिम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां दशमस्कन्धे पूर्वार्धे षष्ठोऽध्यायः ॥ ६ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

अथ सप्तमोऽध्यायः
श्रीराजोवाच
येन येनावतारेण भगवान्हरिरीश्वरः
करोति कर्णरम्याणि मनोज्ञानि च नः प्रभो १
यच्छृण्वतोऽपैत्यरतिर्वितृष्णा सत्त्वं च शुद्ध्यत्यचिरेण पुंसः
भक्तिर्हरौ तत्पुरुषे च सख्यं तदेव हारं वद मन्यसे चेत् २
अथान्यदपि कृष्णस्य तोकाचरितमद्भुतम्
मानुषं लोकमासाद्य तज्जातिमनुरुन्धतः ३
श्रीशुक उवाच
कदाचिदौत्थानिककौतुकाप्लवे जन्मर्क्षयोगे समवेतयोषिताम्
वादित्रगीतद्विजमन्त्रवाचकैश्चकार सूनोरभिषेचनं सती ४
नन्दस्य पत्नी कृतमज्जनादिकं विप्रैः कृतस्वस्त्ययनं सुपूजितैः
अन्नाद्यवासःस्रगभीष्टधेनुभिः सञ्जातनिद्रा क्षमशीशयच्छनैः ५
औत्थानिकौत्सुक्यमना मनस्विनी समागतान्पूजयती व्रजौकसः
नैवाशृणोद्वै रुदितं सुतस्य सा रुदन्स्तनार्थी चरणावुदक्षिपत् ६
अधःशयानस्य शिशोरनोऽल्पक प्रवालमृद्वङ्घ्रिहतं व्यवर्तत
विध्वस्तनानारसकुप्यभाजनं व्यत्यस्तचक्राक्षविभिन्नकूबरम् ७
दृष्ट्वा यशोदाप्रमुखा व्रजस्त्रिय
औत्थानिके कर्मणि याः समागताः
नन्दादयश्चाद्भुतदर्शनाकुलाः
कथं स्वयं वै शकटं विपर्यगात् ८
ऊचुरव्यवसितमतीन्गोपान्गोपीश्च बालकाः
रुदतानेन पादेन क्षिप्तमेतन्न संशयः ९
न ते श्रद्दधिरे गोपा बालभाषितमित्युत
अप्रमेयं बलं तस्य बालकस्य न ते विदुः १०
रुदन्तं सुतमादाय यशोदा ग्रहशङ्किता
कृतस्वस्त्ययनं विप्रैः सूक्तैः स्तनमपाययत् ११
पूर्ववत्स्थापितं गोपैर्बलिभिः सपरिच्छदम्
विप्रा हुत्वार्चयां चक्रुर्दध्यक्षतकुशाम्बुभिः १२
येऽसूयानृतदम्भेर्षा हिंसामानविवर्जिताः
न तेषां सत्यशीलानामाशिषो विफलाः कृताः १३
इति बालकमादाय सामर्ग्यजुरुपाकृतैः
जलैः पवित्रौषधिभिरभिषिच्य द्विजोत्तमैः १४

वाचयित्वा स्वस्त्ययनं नन्दगोपः समाहितः
हुत्वा चाग्निं द्विजातिभ्यः प्रादादन्नं महागुणम् १५
गावः सर्वगुणोपेता वासःस्रग्रुक्ममालिनीः
आत्मजाभ्युदयार्थाय प्रादात्ते चान्वयुञ्जत १६
विप्रा मन्त्रविदो युक्तास्तैर्याः प्रोक्तास्तथाशिषः
ता निष्फला भविष्यन्ति न कदाचिदपि स्फुटम् १७
एकदारोहमारूढं लालयन्ती सुतं सती
गरिमाणं शिशोर्वोढुं न सेहे गिरिकूटवत् १८
भूमौ निधाय तं गोपी विस्मिता भारपीडिता
महापुरुषमादध्यौ जगतामास कर्मसु १९
दैत्यो नाम्ना तृणावर्तः कंसभृत्यः प्रणोदितः
चक्रवातस्वरूपेण जहारासीनमर्भकम् २०
गोकुलं सर्वमावृण्वन्मुष्णंश्चक्षूंषि रेणुभिः
ईरयन्सुमहाघोर शब्देन प्रदिशो दिशः २१
मुहूर्तमभवद्गोष्ठं रजसा तमसावृतम्
सुतं यशोदा नापश्यत्तस्मिन्न्यस्तवती यतः २२
नापश्यत्कश्चनात्मानं परं चापि विमोहितः
तृणावर्तनिसृष्टाभिः शर्कराभिरुपद्रुतः २३
इति खरपवनचक्रपांशुवर्षे सुतपदवीमबलाविलक्ष्य माता
अतिकरुमनुस्मरन्त्यशोचद्भुवि पतिता मृतवत्सका यथा गौः २४
रुदितमनुनिशम्य तत्र गोप्यो भृशमनुतप्तधियोऽश्रुपूर्णमुख्यः
रुरुदुरनुपलभ्य नन्दसूनुं पवन उपारतपांशुवर्षवेगे २५
तृणावर्तः शान्तरयो वात्यारूपधरो हरन्
कृष्णं नभोगतो गन्तुं नाशक्नोद्भूरिभारभृत् २६
तमश्मानं मन्यमान आत्मनो गुरुमत्तया
गले गृहीत उत्स्रष्टुं नाशक्नोदद्भुतार्भकम् २७
गलग्रहणनिश्चेष्टो दैत्यो निर्गतलोचनः
अव्यक्तरावो न्यपतत्सहबालो व्यसुर्व्रजे २८
तमन्तरिक्षात्पतितं शिलायां विशीर्णसर्वावयवं करालम्
पुरं यथा रुद्र शरेण विद्धं स्त्रियो रुदत्यो ददृशुः समेताः २९
प्रादाय मात्रे प्रतिहृत्य विस्मिताः कृष्णं च तस्योरसि लम्बमानम्
तं स्वस्तिमन्तं पुरुषादनीतं विहायसा मृत्युमुखात्प्रमुक्तम्
गोप्यश्च गोपाः किल नन्दमुख्या लब्ध्वा पुनः प्रापुरतीव मोदम् ३०

अहो बतात्यद्भुतमेष रक्षसा बालो निवृत्तिं गमितोऽभ्यगात्पुनः
हिंस्रः स्वपापेन विहिंसितः खलः साधुः समत्वेन भयाद्विमुच्यते ३१
किं नस्तपश्चीर्णमधोक्षजार्चनं
पूर्तेष्टदत्तमुत भूतसौहृदम्
यत्सम्परेतः पुनरेव बालको
दिष्ट्या स्वबन्धून्प्रणयन्नुपस्थितः ३२
दृष्ट्वाद्भुतानि बहुशो नन्दगोपो बृहद्वने
वसुदेववचो भूयो मानयामास विस्मितः ३३
एकदार्भकमादाय स्वाङ्कमारोप्य भामिनी
प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ३४
पीतप्रायस्य जननी सुतस्य रुचिरस्मितम्
मुखं लालयती राजञ्जृम्भतो ददृशे इदम् ३५
खं रोदसी ज्योतिरनीकमाशाः सूर्येन्दुवह्निश्वसनाम्बुधींश्च
द्वीपान्नगांस्तद्दुहितॄर्वनानि भूतानि यानि स्थिरजङ्गमानि ३६
सा वीक्ष्य विश्वं सहसा राजन्सञ्जातवेपथुः
सम्मील्य मृगशावाक्षी नेत्रे आसीत्सुविस्मिता ३७

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे तृणावर्तमोक्षो नाम सप्तमोऽध्यायः

जानीत माऽऽगतं यज्ञं युष्मद्-धर्मविवक्षया ॥ ३८ ॥
अहं योगस्य साङ्ख्यस्य सत्यस्यर्तस्य तेजसः ।
परायणं द्विजश्रेष्ठाः श्रियः कीर्तेः दमस्य च ॥ ३९ ॥
मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् ।
सुहृदं प्रियमात्मानं साम्यासङ्गादयोगुणाः ॥ ४० ॥
इति मे छिन्नसन्देहा मुनयः सनकादयः ।
सभाजयित्वा परया भक्त्यागृणत संस्तवैः ॥ ४१ ॥
तैरहं पूजितः सम्यक् संस्तुतः परमर्षिभिः ।
प्रत्येयाय स्वकं धाम पश्यतः परमेष्ठिनः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां एकादशस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

भक्तेर्महत्त्वं ध्यानयोगवर्णनं च -

श्रीउद्धव उवाच -

( अनुष्टुप् )

वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ।
तेषां विकल्पप्राधान्यं उताहो एकमुख्यता ॥ १ ॥
भवता उदाहृतः स्वामिन् भक्तियोगोऽनपेक्षितः ।
निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मनः ॥ २ ॥

श्रीभगवानुवाच -

कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ।
मयाऽऽदौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥ ३ ॥
तेन प्रोक्ता स्वपुत्राय मनवे पूर्वजाय सा ।
ततो भृग्वादयोऽगृह्णन् सप्त ब्रह्ममहर्षयः ॥ ४ ॥
तेभ्यः पितृभ्यः तत्पुत्रा देवदानवगुह्यकाः ।
मनुष्याः सिद्धगन्धर्वाः सविद्याधरचारणाः ॥ ५ ॥
किन्देवाः किन्नरा नागा रक्षः किम्पुरुषादयः ।
बह्व्यस्तेषां प्रकृतयो रजःसत्त्वतमोभुवः ॥ ६ ॥
याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा ।
यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ॥ ७ ॥
एवं प्रकृतिवैचित्र्याद् भिद्यन्ते मतयो नृणाम् ।
पारम्पर्येण केषाञ्चित् पाषण्डमतयोऽपरे ॥ ८ ॥
मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ।
श्रेयो वदंति अनेकांतं यथाकर्म यथारुचि ॥ ९ ॥
धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम् ।
अन्ये वदंति स्वार्थं वा ऐश्वर्यं त्यागभोजनम् ॥ १० ॥
केचिद् यज्ञतपो दानं व्रतानि नियमान् यमान् ।
आद्यंतवंत एवैषां लोकाः कर्मविनिर्मिताः ।
दुःखोदर्काः तमोनिष्ठाः क्षुद्रानंदाः शुचार्पिताः ॥ ११ ॥
मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः ।
मयाऽऽत्मना सुखं यत्तत् कुतः स्याद् विषयात्मनाम् ॥ १२ ॥
अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः ।
मया सन्तुष्टमनसः सर्वाः सुखमया दिशः ॥ १३ ॥

( उपेंद्रवज्रा )

न पारमेष्ठ्यं न महेंद्रधिष्ण्यं
    न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीः अपुनर्भवं वा
    मय्यर्पितात्मेच्छति मद् विनान्यत् ॥ १४ ॥
( अनुष्टुप् )
न तथा मे प्रियतम आत्मयोनिर्न शङ्करः ।
न च सङ्कर्षणो न श्रीः नैवात्मा च यथा भवान् ॥ १५ ॥
निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् ।
अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥ १६ ॥
( इंद्रवंशा )
निष्किञ्चना मय्यनुरक्तचेतसः
    शांता महांतोऽखिलजीववत्सलाः ।
कामैरनालब्धधियो जुषन्ति यत्
    नैरपेक्ष्यं न विदुः सुखं मम ॥ १७ ॥
( अनुष्टुप् )
बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः ।
प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते ॥ १८ ॥
यथाग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात् ।
तथा मद्विषया भक्तिः उद्धवैनांसि कृत्स्नशः ॥ १९ ॥
न साधयति मां योगो न साङ्ख्यं धर्म उद्धव ।
न स्वाध्यायः तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥ २० ॥
भक्त्याहमेकया ग्राह्यः श्रद्धयाऽऽत्मा प्रियः सताम् ।
भक्तिः पुनाति मन्निष्ठा श्वपाकान् अपि संभवात् ॥ २१ ॥
धर्मः सत्यदयोपेतो विद्या वा तपसान्विता ।
मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि ॥ २२ ॥
कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनाऽऽनन्दाश्रुकलया शुध्येद् भक्त्या विनाऽऽशयः ॥ २३ ॥
( मिश्र )
वाग्-गद्-गदा द्रवते यस्य चित्तं
    रुदत्यभीक्ष्णं हसति क्वचित्-च ।
विलज्ज उद्गायति नृत्यते च
    मद्भक्तियुक्तो भुवनं पुनाति ॥ २४ ॥
यथाग्निना हेम मलं जहाति

ध्मातं पुनः स्वं भजते च रूपम् ।
आत्मा च कर्मानुशयं विधूय
मद्भक्तियोगेन भजत्यथो माम् ॥ २५ ॥
यथा यथाऽऽत्मा परिमृज्यतेऽसौ
मत्पुण्यगाथा श्रवणाभिधानैः ।
तथा तथा पश्यति वस्तु सूक्ष्मं
चक्षुर्यथैवाञ्जनसंप्रयुक्तम् ॥ २६ ॥
( अनुष्टुप् )
विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते ।
मां अनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥ २७ ॥
तस्मात् असदभिध्यानं यथा स्वप्नमनोरथम् ।
हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥ २८ ॥
स्त्रीणां स्त्रीसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् ।
क्षेमे विविक्त आसीनः चिन्तयेत् मां अतन्द्रितः ॥ २९ ॥
न तथास्य भवेत्क्लेशो बन्धश्चान्यप्रसङ्गतः ।
योषित् सङ्गात् यथा पुंसो यथा तत् सङ्गिसङ्गतः ॥ ३० ॥
श्रीउद्धव उवाच -
यथा त्वां अरविन्दाक्ष यादृशं वा यदात्मकम् ।
ध्यायेत् मुमुक्षुः एतन्मे ध्यानं त्वं वक्तुमर्हसि ॥ ३१ ॥
श्रीभगवानुवाच -
सम आसन आसीनः समकायो यथासुखम् ।
हस्तौ उत्सङ्ग आधाय स्वनासाग्रकृतेक्षणः ॥ ३२ ॥
प्राणस्य शोधयेत् मार्गं पूरकुम्भकरेचकैः ।
विपर्ययेणापि शनैः अभ्यसेत् निर्जितेन्द्रियः ॥ ३३ ॥
हृद्यविच्छिन्न-मोंकारं घण्टानादं विसोर्णवत् ।
प्राणेन-उदीर्य तत्राथ पुनः संवेशयेत् स्वरम् ॥ ३४ ॥
एवं प्रणवसंयुक्तं प्राणमेव समभ्यसेत् ।
दशकृत्वस्त्रिषवणं मासाद्-अर्वाग् जितानिलः ॥ ३५ ॥
हृत्पुण्डरीकमन्तस्थं ऊर्ध्वनालमधोमुखम् ।
ध्यात्वोर्ध्वमुखमुन्निद्रं अष्टपत्रं सकर्णिकम् ॥ ३६ ॥
कर्णिकायां न्यसेत् सूर्य सोमाग्नीन् उत्तरोत्तरम् ।
वह्निमध्ये स्मरेद् रूपं ममैतद् ध्यानमङ्गलम् ॥ ३७ ॥
समं प्रशान्तं सुमुखं दीर्घचारुचतुर्भुजम् ।

सुचारुसुन्दरग्रीवं सुकपोलं शुचिस्मितम् ॥ ३८ ॥
समानकर्णविन्यस्तस्फुरन्मकरकुण्डलम् ।
हेमाम्बरं घनश्यामं श्रीवत्स श्रीनिकेतनम् ॥ ३९ ॥
शङ्खचक्रगदापद्म वनमालाविभूषितम् ।
नूपुरैः विलसत्पादं कौस्तुभप्रभया युतम् ॥ ४० ॥
द्युमत् किरीटकटक कटिसूत्राङ्गदायुतम् ।
सर्वाङ्गसुन्दरं हृद्यं प्रसाद सुमुखेक्षणम् ।
सुकुमारमभिध्यायेत् सर्वाङ्गेषु मनो दधत् ॥ ४१ ॥
इन्द्रियाणीन्द्रियार्थेभ्यो मनसाऽऽकृष्य तन्मनः ।
बुद्ध्या सारथिना धीरः प्रणयेन् मयि सर्वतः ॥ ४२ ॥
तत्सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् ।
नान्यानि चिन्तयेद् भूयः सुस्मितं भावयेत् मुखम् ॥ ४३ ॥
तत्र लब्धपदं चित्तं आकृष्य व्योम्नि धारयेत् ।
तच्च त्यक्त्वा मदारोहो न किञ्चिदपि चिन्तयेत् ॥ ४४ ॥
एवं समाहितमतिः मां एवात्मानमात्मनि ।
विचष्टे मयि सर्वात्मन् ज्योतिर्ज्योतिषि संयुतम् ॥ ४५ ॥
ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः ।
संयास्यत्याशु निर्वाणं द्रव्य ज्ञानक्रियाभ्रमः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां एकादशस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

अष्टादशसिद्धिवर्णनम् -

श्रीभगवानुवाच
जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः
मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः १
श्रीउद्धव उवाच
कया धारणया का स्वित्कथं वा सिद्धिरच्युत
कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान् २
श्रीभगवानुवाच
सिद्धयोऽष्टादश प्रोक्ता धारणा योगपारगैः
तासामष्टौ मत्प्रधाना दशैव गुणहेतवः ३
अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः
प्राकाम्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ४
गुणेष्वसङ्गो वशिता यत्कामस्तदवस्यति
एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः ५
अनूर्मिमत्त्वं देहेऽस्मिन्दूरश्रवणदर्शनम्
मनोजवः कामरूपं परकायप्रवेशनम् ६
स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनम्
यथासङ्कल्पसंसिद्धिराज्ञाप्रतिहता गतिः ७
त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता
अग्न्यर्काम्बुविषादीनां प्रतिष्टम्भोऽपराजयः ८
एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः
यया धारणया या स्याद्यथा वा स्यान्निबोध मे ९
भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयेन्मनः
अणिमानमवाप्नोति तन्मात्रोपासको मम १०
महत्तत्त्वात्मनि मयि यथासंस्थं मनो दधत्
महिमानमवाप्नोति भूतानां च पृथक्पृथक् ११
परमाणुमये चित्तं भूतानां मयि रञ्जयन्

कालसूक्ष्मार्थतां योगी लघिमानमवाप्नुयात् १२
धारयन्मय्यहंतत्त्वे मनो वैकारिकेऽखिलम्
सर्वेन्द्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः १३
महत्यात्मनि यः सूत्रे धारयेन्मयि मानसम्
प्राकाम्यं पारमेष्ठ्यं मे विन्दतेऽव्यक्तजन्मनः १४
विष्णौ त्र्यधीश्वरे चित्तं धारयेत्कालविग्रहे
स ईशित्वमवाप्नोति क्षेत्रज्ञक्षेत्रचोदनाम् १५
नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते
मनो मय्यादधद्योगी मद्धर्मा वशितामियात् १६
निर्गुणे ब्रह्मणि मयि धारयन्विशदं मनः
परमानन्दमाप्नोति यत्र कामोऽवसीयते १७
श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि
धारयञ्छ्वेततां याति षडूर्मिरहितो नरः १८
मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन्
तत्रोपलब्धा भूतानां हंसो वाचः शृणोत्यसौ १९
चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि
मां तत्र मनसा ध्यायन्विश्वं पश्यति दूरतः २०
मनो मयि सुसंयोज्य देहं तदनुवायुना
मद्धारणानुभावेन तत्रात्मा यत्र वै मनः २१
यदा मन उपादाय यद्यद्रूपं बुभूषति
तत्तद्भवेन्मनोरूपं मद्योगबलमाश्रयः २२
परकायं विशन्सिद्ध आत्मानं तत्र भावयेत्
पिण्डं हित्वा विशेत्प्राणो वायुभूतः षडङ्घ्रिवत् २३
पाष्ण्र्यापीड्य गुदं प्राणं हृदुरःकण्ठमूर्धसु
आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वोत्सृजेत्तनुम् २४
विहरिष्यन्सुराक्रीडे मत्स्थं सत्त्वं विभावयेत्
विमानेनोपतिष्ठन्ति सत्त्ववृत्तीः सुरस्त्रियः २५
यथा सङ्कल्पयेद्बुद्ध्या यदा वा मत्परः पुमान्

मयि सत्ये मनो युञ्जंस्तथा तत्समुपाश्नुते २६
यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान्
कुतश्चिन्न विहन्येत तस्य चाज्ञा यथा मम २७
मद्भक्त्या शुद्धसत्त्वस्य योगिनो धारणाविदः
तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता २८
अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः
मद्योगशान्तचित्तस्य यादसामुदकं यथा २९
मद्विभूतीरभिध्यायन्श्रीवत्सास्त्रविभूषिताः
ध्वजातपत्रव्यजनैः स भवेदपराजितः ३०
उपासकस्य मामेवं योगधारणया मुनेः
सिद्धयः पूर्वकथिता उपतिष्ठन्त्यशेषतः ३१
जितेन्द्रियस्य दान्तस्य जितश्वासात्मनो मुनेः
मद्धारणां धारयतः का सा सिद्धिः सुदुर्लभा ३२
अन्तरायान्वदन्त्येता युञ्जतो योगमुत्तमम्
मया सम्पद्यमानस्य कालक्षपणहेतवः ३३
जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः
योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजेत् ३४
सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः
अहं योगस्य साङ्ख्यस्य धर्मस्य ब्रह्मवादिनाम् ३५
अहमात्मान्तरो बाह्योऽनावृतः सर्वदेहिनाम्
यथा भूतानि भूतेषु बहिरन्तः स्वयं तथा ३६

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे पञ्चदशोऽध्यायः

अथ षोडशोऽध्यायः

श्रीउद्धव उवाच

त्वं ब्रह्म परमं साक्षादनाद्यन्तमपावृतम्
सर्वेषामपि भावानां त्राणस्थित्यप्ययोद्भवः १
उच्चावचेषु भूतेषु दुर्ज्ञेयमकृतात्मभिः
उपासते त्वां भगवन्याथातथ्येन ब्राह्मणाः २
येषु येषु च भूतेषु भक्त्या त्वां परमर्षयः
उपासीनाः प्रपद्यन्ते संसिद्धिं तद्वदस्व मे ३
गूढश्चरसि भूतात्मा भूतानां भूतभावन
न त्वां पश्यन्ति भूतानि पश्यन्तं मोहितानि ते ४
याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूते
ता मह्यमाख्याह्यनुभावितास्ते नमामि ते तीर्थपदाङ्घ्रिपद्मम् ५

श्रीभगवानुवाच

एवमेतदहं पृष्टः प्रश्नं प्रश्नविदां वर
युयुत्सुना विनशने सपत्नैरर्जुनेन वै ६
ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्मं राज्यहेतुकम्
ततो निवृत्तो हन्ताहं हतोऽयमिति लौकिकः ७
स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः
अभ्यभाषत मामेवं यथा त्वं रणमूर्धनि ८
अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः
अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ९
अहं गतिर्गतिमतां कालः कलयतामहम्
गुणानां चाप्यहं साम्यं गुणिन्यौत्पत्तिको गुणः १०
गुणिनामप्यहं सूत्रं महतां च महानहम्
सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ११
हिरण्यगर्भो वेदानां मन्त्राणां प्रणवस्त्रिवृत्
अक्षराणामकारोऽस्मि पदानि च्छन्दुसामहम् १२
इन्द्रो ऽहं सर्वदेवानां वसूनामस्मि हव्यवाट्
आदित्यानामहं विष्णू रुद्राणां नीललोहितः १३
ब्रह्मर्षीणां भृगुरहं राजर्षीणामहं मनुः
देवर्षीणां नारदोऽहं हविर्धान्यस्मि धेनुषु १४
सिद्धेश्वराणां कपिलः सुपर्णोऽहं पतत्रिणाम्
प्रजापतीनां दक्षोऽहं पितॄणामहमर्यमा १५

मां विद्ध्युद्धव दैत्यानां प्रह्लादमसुरेश्वरम्
सोमं नक्षत्रौषधीनां धनेशं यक्षरक्षसाम् १६
ऐरावतं गजेन्द्राणां यादसां वरुणं प्रभुम्
तपतां द्युमतां सूर्यं मनुष्याणां च भूपतिम् १७
उच्चैःश्रवास्तुरङ्गाणां धातूनामस्मि काञ्चनम्
यमः संयमतां चाहम्सर्पाणामस्मि वासुकिः १८
नागेन्द्राणामनन्तोऽहं मृगेन्द्रः शृङ्गिदंष्ट्रिणाम्
आश्रमाणामहं तुर्यो वर्णानां प्रथमोऽनघ १९
तीर्थानां स्रोतसां गङ्गा समुद्र ः! सरसामहम्
आयुधानां धनुरहं त्रिपुरघ्नो धनुष्मताम् २०
धिष्ण्यानामस्म्यहं मेरुर्गहनानां हिमालयः
वनस्पतीनामश्वत्थ ओषधीनामहं यवः २१
पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः
स्कन्दोऽहं सर्वसेनान्यामग्रण्यां भगवानजः २२
यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनम्
वाय्वग्न्यर्काम्बुवागात्मा शुचीनामप्यहं शुचिः २३
योगानामात्मसंरोधो मन्त्रोऽस्मि विजिगीषताम्
आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम् २४
स्त्रीणां तु शतरूपाहं पुंसां स्वायम्भुवो मनुः
नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम् २५
धर्माणामस्मि सन्न्यासः क्षेमाणामबहिर्मतिः
गुह्यानां सुनृतं मौनं मिथुनानामजस्त्वहम् २६
संवत्सरोऽस्म्यनिमिषामृतूनां मधुमाधवौ
मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाभिजित् २७
अहं युगानां च कृतं धीराणां देवलोऽसितः
द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्मवान् २८
वासुदेवो भगवतां त्वं तु भागवतेष्वहम्
किम्पुरुषानां हनुमान्विद्याध्राणां सुदर्शनः २९
रत्नानां पद्मरागोऽस्मि पद्मकोशः सुपेशसाम्
कुशोऽस्मि दर्भजातीनां गव्यमाज्यं हविःष्वहम् ३०
व्यवसायिनामहं लक्ष्मीः कितवानां छलग्रहः
तितिक्षास्मि तितिक्षूणां सत्त्वं सत्त्ववतामहम् ३१
ओजः सहो बलवतां कर्माहं विद्धि सात्वताम्

सात्वतां नवमूर्तीनामादिमूर्तिरहं परा ३२
विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसामहम्
भूधराणामहं स्थैर्यं गन्धमात्रमहं भुवः ३३
अपां रसश्च परमस्तेजिष्ठानां विभावसुः
प्रभा सूर्येन्दुताराणां शब्दोऽहं नभसः परः ३४
ब्रह्मण्यानां बलिरहं वीराणामहमर्जुनः
भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसङ्क्रमः ३५
गत्युक्त्युत्सर्गोपादानमानन्दस्पर्शलक्षणम्
आस्वादश्रुत्यवघ्राणमहं सर्वेन्द्रियेन्द्रियम् ३६
पृथिवी वायुराकाश आपो ज्योतिरहं महान्
विकारः पुरुषोऽव्यक्तं रजः सत्त्वं तमः परम्
अहमेतत्प्रसङ्ख्यानं ज्ञानं तत्त्वविनिश्चयः ३७
मयेश्वरेण जीवेन गुणेन गुणिना विना
सर्वात्मनापि सर्वेण न भावो विद्यते क्वचित् ३८
सङ्ख्यानं परमाणूनां कालेन क्रियते मया
न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः ३९
तेजः श्रीः कीर्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः
वीर्यं तितिक्षा विज्ञानं यत्र यत्र स मेंऽशकः ४०
एतास्ते कीर्तिताः सर्वाः सङ्क्षेपेण विभूतयः
मनोविकारा एवैते यथा वाचाभिधीयते ४१
वाचं यच्छ मनो यच्छ प्राणान्यच्छेन्द्रियाणि च
आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने ४२
यो वै वाङ्मनसी संयगसंयच्छन्धिया यतिः
तस्य व्रतं तपो दानं स्रवत्यामघटाम्बुवत् ४३
तस्माद्वचो मनः प्राणान्नियच्छेन्मत्परायणः
मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ४४
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे षोडशोऽध्यायः

वर्णधर्मनिरूपणम्, आश्रमेषु ब्रह्मचारी गृहस्थ धर्मवर्णं च -

श्रीउद्धव उवाच -

( अनुष्टुप् )

यस्त्वयाभिहितः पूर्वं धर्मस्त्वद्‌भक्तिलक्षणः ।
वर्णाश्रमाचारवतां सर्वेषां द्‌विपदामपि ॥ १ ॥
यथानुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत् ।
स्वधर्मेणारविन्दाक्ष तत् समाख्यातुमर्हसि ॥ २ ॥
पुरा किल महाबाहो धर्मं परमकं प्रभो ।
यत्तेन हंसरूपेण ब्राह्मणेऽभ्यात्थ माधव ॥ ३ ॥
स इदानीं सुमहता कालेनामित्रकर्शन ।
न प्रायो भविता मर्त्य लोके प्राक् अनुशासितः ॥ ४ ॥
वक्ता कर्ताविता नान्यो धर्मस्याच्युत ते भुवि ।
सभायामपि वैरिञ्च्यां यत्र मूर्तिधराः कलाः ॥ ५ ॥
कर्त्राविता प्रवक्त्रा च भवता मधुसूदन ।
त्यक्ते महीतले देव विनष्टं कः प्रवक्ष्यति ॥ ६ ॥
तत्त्वं नः सर्वधर्मज्ञ धर्मः त्वद्‌भक्तिलक्षणः ।
यथा यस्य विधीयेत तथा वर्णय मे प्रभो ॥ ७ ॥
श्रीशुक उवाच -
इत्थं स्वभृत्यमुख्येन पृष्टः स भगवान् हरिः ।
प्रीतः क्षेमाय मर्त्यानां धर्मान् आह सनातनान् ॥ ८ ॥
श्रीभगवानुवाच -
धर्म्य एष तव प्रश्नो नैःश्रेयसकरो नृणाम् ।
वर्णाश्रमाचारवतां तमुद्धव निबोध मे ॥ ९ ॥
आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः ।
कृतकृत्याः प्रजा जात्या तस्मात् कृतयुगं विदुः ॥ १० ॥
वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक् ।
उपासते तपोनिष्ठा हंसं मां मुक्तकिल्बिषाः ॥ ११ ॥
त्रेतामुखे महाभाग प्राणान् मे हृदयात् त्रयी ।
विद्या प्रादुरभूत् तस्या अहमासं त्रिवृन्मखः ॥ १२ ॥
विप्रक्षत्रियविट्‌शूद्रा मुखबाहूरुपादजाः ।
वैराजात् पुरुषात् जाता य आत्माचारलक्षणाः ॥ १३ ॥
गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ।

वक्षःस्थलाद् वने वासो न्यासः शिर्षणि संस्थितः ॥ १४ ॥
वर्णानां आश्रमाणां च जन्मभूम्यनुसारिणीः ।
आसन् प्रकृतयो नृणां नीचैः नीचोत्तमोत्तमाः ॥ १५ ॥
शमो दमस्तपः शौचं संतोषः क्षांतिरार्जवम् ।
मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः ॥ १६ ॥
तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः ।
स्थैर्यं ब्रह्मण्यतैश्वर्यं क्षत्र प्रकृतयस्त्विमाः ॥ १७ ॥
आस्तिक्यं दाननिष्ठा च अदंभो ब्रह्मसेवनम् ।
अतुष्टिः अर्थोपचयैः वैश्य प्रकृतयस्त्विमाः ॥ १८ ॥
शुश्रूषणं द्विजगवां देवानां चापि अमायया ।
तत्र लब्धेन संतोषः शूद्र प्रकृतयस्त्विमाः ॥ १९ ॥
अशौचमनृतं स्तेयं नास्तिक्यं शुष्कविग्रहः ।
कामः क्रोधश्च तर्षश्च स्वभावोन्त्यावसायिनाम् ॥ २० ॥
अहिंसा सत्यमस्तेयं अकामक्रोधलोभता ।
भूतप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः ॥ २१ ॥
द्वितीयं प्राप्यानुपूर्व्यात् जन्मोपानयनं द्विजः ।
वसन् गुरुकुले दान्तो ब्रह्माधीयीत चाहूतः ॥ २२ ॥
मेखला अजिन दण्डाक्ष ब्रह्मसूत्रकमण्डलून् ।
जटिलो अधौतदद्वासः अरक्तपीठः कुशान् दधत् ॥ २३ ॥
स्नानभोजनहोमेषु जपोच्चारे च वाग्यतः ।
न च्छिंद्यान् नखरोमाणि कक्ष-उपस्थगतान्यपि ॥ २४ ॥
रेतो न अवकिरेत् जातु ब्रह्मव्रतधरः स्वयम् ।
अवकीर्णे अवगाह्य अप्सु यतासुः त्रिपदीं जपेत् ॥ २५ ॥
अग्न्यर्काचार्य-गो-विप्र गुरु-वृद्ध-सुरान् शुचिः ।
समाहित उपासीत संध्ये च यतवाग्-जपन् ॥ २६ ॥
आचार्यं मां विजानीयात् न-अवमन्येत कर्हिचित् ।
न मर्त्यबुद्ध्यासूयेत सर्वदेवमयो गुरुः ॥ २७ ॥
सायं प्रातः उपानीय भैक्ष्यं तस्मै निवेदयेत् ।
यच्चान्यद् अपि अनुज्ञातं उपयुञ्जीत संयतः ॥ २८ ॥
शुश्रूषमाण आचार्यं सदा-उपासीत नीचवत् ।
यान शय्यासनस्थानैः नातिदूरे कृताञ्जलिः ॥ २९ ॥
एवंवृत्तो गुरुकुले वसेद् भोगविवर्जितः ।
विद्या समाप्यते यावद् बिभ्रद् व्रतं अखण्डितम् ॥ ३० ॥

यदि असौ छंदसां लोकं आरोक्ष्यन् ब्रह्मविष्टपम् ।
गुरवे विन्यसेद् देहं स्वाध्यायार्थं बृहद्व्रतः ॥ ३१ ॥
अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम् ।
अपृथग्धीः उपसीत ब्रह्मवर्चस्वी अकल्मषः ॥ ३२ ॥
स्त्रीणां निरीक्षण स्पर्श संलाप क्ष्वेलनादिकम् ।
प्राणिनो मिथुनीभूतान् अगृहस्थो अग्रतस्त्यजेत् ॥ ३३ ॥
शौचं आचमनं स्नानं संध्योपासनमार्जवम् ।
तीर्थसेवा जपोऽस्पृश्या अभक्ष्य संभाष्यवर्जनम् ॥ ३४ ॥
सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनंदन ।
मद्भवः सर्वभूतेषु मनोवाक्-कायसंयमः ॥ ३५ ॥
एवं बृहद्व्रतधरो ब्राह्मणोऽग्निः इव ज्वलन् ।
मद्भक्तः तीव्रतपसा दग्धकर्माशयोऽमलः ॥ ३६ ॥
अथ अनंतरं आवेक्ष्यन् यथा जिज्ञासितागमः ।
गुरवे दक्षिणां दत्त्वा स्नायाद् गुर्वनुमोदितः ॥ ३७ ॥
गृहं वनं वोपविशेत् प्रव्रजे द्वा द्विजोत्तमः ।
आश्रमादाश्रमं गच्छेत् नान्यथा मत्परश्चरेत् ॥ ३८ ॥
गृहार्थी सदृशीं भार्यां उद्वहेद् अजुगुप्सिताम् ।
यवीयसीं तु वयसा यां सवर्णां अनुक्रमात् ॥ ३९ ॥
इज्य-अध्ययन-दानानि सर्वेषां च द्विजन्मनाम् ।
प्रतिग्रहो-अध्यापनं च ब्राह्मणस्यैव याजनम् ॥ ४० ॥
प्रतिग्रहं मन्यमानः तपस्तेजोयशोनुदम् ।
अन्याभ्यामेव जीवेत शिलैर्वा दोषदृक् तयोः ॥ ४१ ॥
ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते ।
कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च ॥ ४२ ॥
( इंद्रवज्रा )
शिलोञ्छवृत्त्या परितुष्टचित्तो
धर्मं महांतं विरजं जुषाणः ।
मय्यर्पितात्मा गृह एव तिष्ठन्
नातिप्रसक्तः समुपैति शांतिम् ॥ ४३ ॥
( अनुष्टुप् )
समुद्धरंति ये विप्रं सीदंतं मत्परायणम् ।
तान् उद्धरिष्ये न चिराद् आपद्भ्यो नौः इवार्णवात् ॥ ४४ ॥
सर्वाः समुद्धरेद् राजा पितेव व्यसनात् प्रजाः ।

आत्मानं आत्मना धीरो यथा गजपतिर्गजान् ॥ ४५ ॥
एवंविधो नरपतिः विमानेनार्कवर्चसा ।
विधूय इह अशुभं कृत्स्नं इंद्रेण सह मोदते ॥ ४६ ॥
सीदन् विप्रः वणिक् वृत्त्या पण्यैः एवापदं तरेत् ।
खड्गेन वा आपदाक्रांतो न श्ववृत्त्या कथञ्चन ॥ ४७ ॥
वैश्यवृत्त्या तु राजन्यो जीवेत् मृगययापदि ।
चरेद् वा विप्ररूपेण न श्ववृत्त्या कथञ्चन ॥ ४८ ॥
शूद्रवृत्तिं भजेद् वैश्यः शूद्रः कारुकटक्रियाम् ।
कृच्छ्रान् मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्मणा ॥ ४९ ॥
वेदाध्याय स्वधा स्वाहा बलि अन्नाद्यैः यथोदयम् ।
देवर्षिपितृभूतानि मद् रूपाणि अन्वहं यजेत् ॥ ५० ॥
यदृच्छया उपपन्नेन शुक्लेन उपार्जितेन वा ।
धनेन अपीडयन् भृत्यान् न्यायेन एव आहरेत् क्रतून् ॥ ५१ ॥
कुटुंबेषु न सज्जेत न प्रमाद्येत् कुटुंबी अपि ।
विपश्चित् नश्वरं पश्येद् अदृष्टमपि दृष्टवत् ॥ ५२ ॥
पुत्रदारा आप्तबंधूनां संगमः पांथसङ्गमः ।
अनुदेहं वियन्त्येते स्वप्नो निद्रानुगो यथा ॥ ५३ ॥
इत्थं परिमृशन् मुक्तो गृहेषु अतिथिवद् वसन् ।
न गृहैः अनुबध्येत निर्ममो निरहङ्कृतः ॥ ५४ ॥
कर्मभिः गृहमेधीयैः इष्ट्वा मामेव भक्तिमान् ।
तिष्ठेद् वनं वोपविशेत् प्रजावान् वा परिव्रजेत् ॥ ५५ ॥
यस्तु आसक्तमतिः गेहे पुत्रवित्तैषणा आतुरः ।
स्त्रैणः कृपणधीः मूढो मम अहं इति बध्यते ॥ ५६ ॥
अहो मे पितरौ वृद्धौ भार्या बालात्मजऽऽत्मजाः ।
अनाथा मामृते दीनाः कथं जीवन्ति दुःखिताः ॥ ५७ ॥
एवं गृहाशयाक्षिप्त हृदयो मूढधीः अयम् ।
अतृप्तस्तान् अनुध्यायन् मृतोऽन्धं विशते तमः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां एकादशस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

वानप्रस्थ संन्यासाश्रमधर्म निरूपणम् -

श्रीभगवानुवाच -

( अनुष्टुप् )

वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वा ।
वन एव वसेत् शान्तः तृतीयं भागमायुषः ॥ १ ॥
कन्दमूलफलैः वन्यैः मेध्यैः वृत्तिं प्रकल्पयेत् ।
वसीत वल्कलं वासः तृणपर्णाजिनानि च ॥ २ ॥
केशरोमनखश्मश्रुमलानि बिभृयाद् दतः ।
न धावेदप्सु मज्जेत त्रिकालं स्थण्डिलेशयः ॥ ३ ॥
ग्रीष्मे तप्येत पञ्चाग्नीन् वर्षास्वासारषाड् जले ।
आकण्ठमग्नः शिशिरे एवंवृत्तस्तपश्चरेत् ॥ ४ ॥
अग्निपक्वं समश्नीयात् कालपक्वमथापि वा ।
उलूखलाश्मकुट्टो वा दन्तोलूखल एव वा ॥ ५ ॥
स्वयं सञ्चिनुयात् सर्वम् आत्मनो वृत्तिकारणम् ।
देशकालबलाभिज्ञो नाददीतान्यदाऽऽहृतम् ॥ ६ ॥
वन्यैश्चरु-पुरोडाशैः निर्वपेत् कालचोदितान् ।
न तु श्रौतेन पशुना मां यजेत वनाश्रमी ॥ ७ ॥
अग्निहोत्रं च दर्शश्च पौर्णमासश्च पूर्ववत् ।
चातुर्मास्यानि च मुनेः आम्नातानि च नैगमैः ॥ ८ ॥
एवं चीर्णेन तपसा मुनिः धर्मनिसंततः ।
मां तपोमयमाराध्य ऋषिलोकादुपैति माम् ॥ ९ ॥
यस्त्वेतत्कृच्छ्रतश्चीर्णं तपो निःश्रेयसं महत् ।
कामायाल्पीयसे युञ्ज्याद् बालिशः कोऽपरस्ततः ॥ १० ॥
यदासौ नियमेऽकल्पो जरया जातवेपथुः ।
आत्मन्यग्नीन् समारोप्य मच्चित्तोऽग्निं समाविशेत् ॥ ११ ॥
यदा कर्मविपाकेषु लोकेषु निरयात्मसु ।
विरागो जायते सम्यङ् न्यस्ताग्निः प्रव्रजेत्ततः ॥ १२ ॥
इष्ट्वा यथोपदेशं मां दत्त्वा सर्वस्वमृत्विजे ।
अग्नीन् स्वप्राण आवेश्य निरपेक्षः परिव्रजेत् ॥ १३ ॥
विप्रस्य वै संन्यसतो देवा दारादिरूपिणः ।
विघ्नान् कुर्वन्त्ययं ह्यस्मान् आक्रम्य समियात् परम् ॥ १४ ॥
बिभृयाच्चेन् मुनिर्वासः कौपीनाच्छादनं परम् ।

त्यक्तं न दण्डपात्राभ्याम् अन्यत् किञ्चिद् अनापदि ॥ १५ ॥
दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं पिबेत् जलम् ।
सत्यपूतां वदेद् वाचं मनःपूतं समाचरेत् ॥ १६ ॥
मौनानीहानिलायामाः दण्डा वाक्-देह-चेतसाम् ।
न ह्येते यस्य सन्त्यङ्ग वेणुभिर्न भवेद् यतिः ॥ १७ ॥
भिक्षां चतुर्षु वर्णेषु विगर्ह्यान् वर्जयन् चरेत् ।
सप्तागारान् असङ्क्लृप्तान् तुष्येत् लब्धेन तावता ॥ १८ ॥
बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः ।
विभज्य पावितं शेषं भुञ्जीताशेषमाहृतम् ॥ १९ ॥
एकश्चरेत् महीमेतां निःसङ्गः संयतेन्द्रियः ।
आत्मक्रीड आत्मरत आत्मवान् समदर्शनः ॥ २० ॥
विविक्तक्षेमशरणो मद्भावविमलाशयः ।
आत्मानं चिन्तयेदेकमभेदेन मया मुनिः ॥ २१ ॥
अन्वीक्षेतात्मनो बन्धं मोक्षं च ज्ञाननिष्ठया ।
बन्ध इन्द्रियविक्षेपो मोक्ष एषां च संयमः ॥ २२ ॥
तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन् मुनिः ।
विरक्तः क्षुद्रकामेभ्यो लब्ध्वा आत्मनि सुखं महत् ॥ २३ ॥
पुरग्रामव्रजान् सार्थान् भिक्षार्थं प्रविशंश्चरेत् ।
पुण्यदेश सरिच्छैशैल वनाश्रमवतीं महीम् ॥ २४ ॥
वानप्रस्थाश्रमपदेषु अभीक्ष्णं भैक्ष्यमाचरेत् ।
संसिध्यत्याश्वसंमोहः शुद्धसत्त्वः शिलान्धसा ॥ २५ ॥
नैतद् वस्तुतया पश्येद् दृश्यमानं विनश्यति ।
असक्तचित्तो विरमेद् इहामुत्र चिकीर्षितात् ॥ २६ ॥
यदेतदात्मनि जगन् मनो-वाक्-प्राण-संहतम् ।
सर्वं मायेति तर्केण स्वस्थः त्यक्त्वा न तत्स्मरेत् ॥ २७ ॥
ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः ।
सलिङ्गान् आश्रमान् त्यक्त्वा चरेद् अविधिगोचरः ॥ २८ ॥
बुधो बालकवत् क्रीडेत् कुशलो जडवच्चरेत् ।
वदेद् उन्मत्तवद् विद्वान् गोचर्यां नैगमश्चरेत् ॥ २९ ॥
वेदवादरतो न स्यात् न पाखण्डी न हैतुकः ।
शुष्कवादविवादे न कञ्चित् पक्षं समाश्रयेत् ॥ ३० ॥
नोद्विजेत जनाद् धीरो जनं चोद्वेजयेत् न तु ।
अतिवादान् तितिक्षेत नावमन्येत कञ्चन ।

देहमुद्दिश्य पशुवत् वैरं कुर्यान् न केनचित् ॥ ३१ ॥
एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः ।
यथेदमुदपात्रेषु भूतान्येकात्मकानि च ॥ ३२ ॥
अलब्ध्वा न विषीदेत कालेकालेऽशनं क्वचित् ।
लब्ध्वा न हृष्येद्-धृतिमानुभयं दैवतं त्रितम् ॥ ३३ ॥
आहारार्थं समीहेत युक्तं तत् प्राणधारणम् ।
तत्त्वं विमृश्यते तेन तद् विज्ञाय विमुच्यते ॥ ३४ ॥
यदृच्छयोपपन्नान्नमद्यात् श्रेष्ठमुतापरम् ।
तथा वासः तथा शय्यां प्राप्तं प्राप्तं भजेन् मुनिः ॥ ३५ ॥
शौचमाचमनं स्नानं न तु चोदनया चरेत् ।
अन्यांश्च नियमान् ज्ञानी यथाहं लीलयेश्वरः ॥ ३६ ॥
न हि तस्य विकल्पाख्या या च मद् वीक्षया हता ।
आ देहान्तात् क्वचित् ख्यातिः ततः संपद्यते मया ॥ ३७ ॥
दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् ।
अजिज्ञासित मद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥ ३८ ॥
तावत् परिचरेद् भक्तः श्रद्धावान् अनसूयकः ।
यावद् ब्रह्म विजानीयान् मामेव गुरुमादृतः ॥ ३९ ॥
यस्त्वसंयत षड्वर्गः प्रचण्डेन्द्रिय सारथिः ।
ज्ञानवैराग्यरहितः त्रिदण्डमुपजीवति ॥ ४० ॥
सुरान् आत्मानमात्मस्थं निह्नुते मां च धर्महा ।
अविपक्वकषायोऽस्माद् अमुष्माच्च विहीयते ॥ ४१ ॥
भिक्षोः धर्मः शमोऽहिंसा तप ईक्षा वनौकसः ।
गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम् ॥ ४२ ॥
ब्रह्मचर्यं तपः शौचं संतोषो भूतसौहृदम् ।
गृहस्थस्यापि ऋतौ गन्तुः सर्वेषां मदुपासनम् ॥ ४३ ॥
इति मां यः स्वधर्मेण भजन् नित्यमनन्यभाक् ।
सर्वभूतेषु मद्भावो मद्भक्तिं विन्दते दृढाम् ॥ ४४ ॥
भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ।
सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥ ४५ ॥
इति स्वधर्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिः ।
ज्ञानविज्ञान सम्पन्नो न चिरात् समुपैति माम् ॥ ४६ ॥
वर्णाश्रमवतां धर्म एष आचार लक्षणः ।
स एव मद्भक्तियुतो निःश्रेयसकरः परः ॥ ४७ ॥

एतत्तेऽभिहितं साधो भवान् पृच्छति यच्च माम् ।
यथा स्वधर्मसंयुक्तो भक्तो मां समियात् परम् ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां एकादशस्कन्धे अष्टादशोऽध्यायः ॥ १८ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

श्रीभगवानुवाच

यो विद्याश्रुतसम्पन्नः आत्मवान्नानुमानिकः

मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि सन्न्यसेत् १

ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः

स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः २

ज्ञानविज्ञानसंसिद्धाः पदं श्रेष्ठं विदुर्मम

ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ३

तपस्तीर्थं जपो दानं पवित्राणीतराणि च

नालं कुर्वन्ति तां सिद्धिं या ज्ञानकलया कृता ४

तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव

ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावतः ५

ज्ञानविज्ञानयज्ञेन मामिष्ट्वात्मानमात्मनि

सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽगमन् ६

त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो

मायान्तरापतति नाद्यपवर्गयोर्यत्

जन्मादयोऽस्य यदमी तव तस्य किं स्युर्

आद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये ७

श्रीउद्धव उवाच

ज्ञानं विशुद्धं विपुलं यथैतद्वैराग्यविज्ञानयुतं पुराणम्

आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगं च महद्विमृग्यम् ८

तापत्रयेणाभिहतस्य घोरे सन्तप्यमानस्य भवाध्वनीश

पश्यामि नान्यच्छरणं तवाङ्घ्रि द्वन्द्वातपत्रादमृताभिवर्षात् ९

दष्टं जनं सम्पतितं बिलेऽस्मिन्कालाहिना क्षुद्र सुखोरुतर्षम्

समुद्धरैनं कृपयापवर्ग्यैर्वचोभिरासिञ्च महानुभाव १०

श्रीभगवानुवाच

इत्थमेतत्पुरा राजा भीष्मं धर्मभृतां वरम्

अजातशत्रुः पप्रच्छ सर्वेषां नोऽनुशृण्वताम् ११

निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः

श्रुत्वा धर्मान्बहून्पश्चान्मोक्षधर्मानपृच्छत १२
तानहं तेऽभिधास्यामि देवव्रतमुखाच्छ्रुतान्
ज्ञानवैराग्यविज्ञान श्रद्धाभक्त्युपबृंहितान् १३
नवैकादश पञ्च त्रीन्भावान्भूतेषु येन वै
ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितम् १४
एतदेव हि विज्ञानं न तथैकेन येन यत्
स्थित्युत्पत्त्यप्ययान् पश्येद्भावानां त्रिगुणात्मनाम् १५
आदावन्ते च मध्ये च सृज्यात्सृज्यं यदन्वियात्
पुनस्तत्प्रतिसङ्क्रामे यच्छिष्येत तदेव सत् १६
श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्
प्रमाणेष्वनवस्थानाद्विकल्पात्स विरज्यते १७
कर्मणां परिणामित्वादाविरिञ्च्यादमङ्गलम्
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् १८
भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ
पुनश्च कथयिष्यामि मद्भक्तेः कारणं परं १९
श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तनम्
परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम २०
आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम्
मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः २१
मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम्
मय्यर्पणं च मनसः सर्वकामविवर्जनम् २२
मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च
इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः २३
एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम्
मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते २४
यदात्मन्यर्पितं चित्तं शान्तं सत्त्वोपबृंहितम्
धर्मं ज्ञानं स वैराग्यमैश्वर्यं चाभिपद्यते २५
यदर्पितं तद्विकल्पे इन्द्रियैः परिधावति

रजस्वलं चासन्निष्ठं चित्तं विद्धि विपर्ययम् २६
धर्मो मद्भक्तिकृत्प्रोक्तो ज्ञानं चैकात्म्यदर्शनम्
गुणेस्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः २७
श्रीउद्धव उवाच
यमः कतिविधः प्रोक्तो नियमो वारिकर्षण।
कः शमः को दमः कृष्ण का तितिक्षा धृतिः प्रभो।। २८
किं दानं किं तपः शौर्यं किं सत्यमृतमुच्यते।
कस्त्यागः किं धनं चेष्टं को यज्ञः का च दक्षिणा ।। २९
पुंसः किं स्विद्बलं श्रीमन् भगो लाभश्च केशव।
का विद्या ह्रीः परा का श्रीः किं सुखं दुःखमेव च।। ३०
कः पण्डितः कश्च मूर्खः कः पन्था उत्पथश्च कः।
कः स्वर्गो नरकः कः स्वित् को बन्धुरुत किं गृहम्।। ३१
आढ्यः को दरिद्रो वा कृपणः कः क ईश्वरः ।
एतान्प्रश्नान्मम ब्रूहि विपरीतांश्च सत्पते।। ३२
श्रीभगवानुवाच
अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः
आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाभयम् ३३
शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम्
तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ३४
एते यमाः सनियमा उभयोर्द्वादश स्मृताः
पुंसामुपासितास्तात यथाकामं दुहन्ति हि ३५
शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः
तितिक्षा दुःखसम्मर्षो जिह्वोपस्थजयो धृतिः ३६
दण्डन्यासः परं दानं कामत्यागस्तपः स्मृतम्
स्वभावविजयः शौर्यं सत्यं च समदर्शनम् ३७
अन्यच्च सुनृता वाणी कविभिः परिकीर्तिता
कर्मस्वसङ्गमः शौचं त्यागः सन्न्यास उच्यते ३८
धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः

दक्षिणा ज्ञानसन्देशः प्राणायामः परं बलम् ३९
भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः
विद्यात्मनि भिदाबाधो जुगुप्सा ह्रीरकर्मसु ४०
श्रीर्गुणा नैरपेक्ष्याद्याः सुखं दुःखसुखात्ययः
दुःखं कामसुखापेक्षा पण्डितो बन्धमोक्षवित् ४१
मूर्खो देहाद्यहंबुद्धिः पन्था मन्निगमः स्मृतः
उत्पथश्चित्तविक्षेपः स्वर्गः सत्त्वगुणोदयः ४२
नरकस्तमउन्नाहो बन्धुर्गुरुरहं सखे
गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ४३
दरिद्रो यस्त्वसन्तुष्टः कृपणो योऽजितेन्द्रियः
गुणेष्वसक्तधीरीशो गुणसङ्गो विपर्ययः ४४
एत उद्धव ते प्रश्नाः सर्वे साधु निरूपिताः
किं वर्णितेन बहुना लक्षणं गुणदोषयोः
गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ४५

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे एकोनविंशोऽध्यायः

ज्ञानकर्मभक्तियोगानां वर्णनम् -

श्रीउद्धव उवाच -

( अनुष्टुप् )

विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते ।
अवेक्षतेऽरविन्दाक्ष गुणं दोषं च कर्मणाम् ॥ १ ॥
वर्णाश्रमविकल्पं च प्रतिलोमानुलोमजम् ।
द्रव्यदेशवयः कालान् स्वर्गं नरकमेव च ॥ २ ॥
गुणदोषभिदादृष्टिमन्तरेण वचस्तव ।
निःश्रेयसं कथं नृणां निषेधविधिलक्षणम् ॥ ३ ॥
पितृदेवमनुष्यानां वेदश्चक्षुस्तवेश्वर ।
श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ॥ ४ ॥
गुणदोषभिदादृष्टिः निगमात्ते न हि स्वतः ।
निगमेनापवादश्च भिदाया इति ह भ्रमः ॥ ५ ॥

श्रीभगवानुवाच -

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥ ६ ॥
निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ।
तेषु अनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ॥ ७ ॥
यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥ ८ ॥
तावत् कर्माणि कुर्वीत न निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥ ९ ॥
स्वधर्मस्थो यजन् यज्ञैः अनाशीःकाम उद्धव ।
न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ॥ १० ॥
अस्मिंल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः ।
ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥ ११ ॥
स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा ।
साधकं ज्ञानभक्तिभ्यां उभयं तदसाधकम् ॥ १२ ॥
न नरः स्वर्गतिं काङ्क्षेत् नारकीं वा विचक्षणः ।
नेमं लोकं च काङ्क्षेत देहावेशात् प्रमाद्यति ॥ १३ ॥
एतद् विद्वान् पुरा मृत्योः अभवाय घटेत सः ।
अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥ १४ ॥

छिद्यमानं यमैः एतैः कृतनीडं वनस्पतिम् ।
खगः स्वकेतमुत्सृज्य क्षेमं याति ह्यलम्पटः ॥ १५ ॥
अहोरात्रैः छिद्यमानं बुद्ध्वाऽऽयुर्भयवेपथुः ।
मुक्तसङ्गः परं बुद्ध्वा निरीह उपशाम्यति ॥ १६ ॥
( मिश्र )
नृदेहमाद्यं सुलभं सुदुर्लभं
प्लवं सुकल्पं गुरुकर्णधारम् ।
मयानुकूलेन नभस्वतेरितं
पुमान् भवाब्धिं न तरेत् स आत्महा ॥ १७ ॥
( अनुष्टुप् )
यदाऽऽरम्भेषु निर्विण्णो विरक्तः संयतन्द्रियः ।
अभ्यासेनात्मनो योगी धारयेद् अचलं मनः ॥ १८ ॥
धार्यमाणं मनो यर्हि भ्राम्यत् आश्वनवस्थितम् ।
अतन्द्रितोऽनुरोधेन मार्गेणात्मवशं नयेत् ॥ १९ ॥
मनोगतिं न विसृजेत् जितप्राणो जितेन्द्रियः ।
सत्त्वसंपन्नया बुद्ध्या मन आत्मवशं नयेत् ॥ २० ॥
एष वै परमो योगो मनसः सङ्ग्रहः स्मृतः ।
हृदयज्ञत्वमन्विच्छन् दम्यस्येवार्वतो मुहुः ॥ २१ ॥
साङ्ख्येन सर्वभावानां प्रतिलोमानुलोमतः ।
भवाप्ययावनुध्यायेन् मनो यावत्प्रसीदति ॥ २२ ॥
निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ।
मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥ २३ ॥
यमादिभिः योगपथैः आन्वीक्षिक्या च विद्यया ।
ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥ २४ ॥
यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितम् ।
योगेनैव दहेदंहो नान्यत्तत्र कदाचन ॥ २५ ॥
स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।
कर्मणां जात्यशुद्धानाम् अनेन नियमः कृतः ।
गुणदोषविधानेन सङ्गानां त्याजनेच्छया ॥ २६ ॥
जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु ।
वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः ॥ २७ ॥
ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः ।
जुषमाणश्च तान्कामान् दुःखोदर्कांश्च गर्हयन् ॥ २८ ॥

प्रोक्तेन भक्तियोगेन भजतो मासकृन्मुनेः ।
कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते ॥ २९ ॥
भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥ ३० ॥
तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ ३१ ॥
यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिः इतरैरपि ॥ ३२ ॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद् यदि वाञ्छति ॥ ३३ ॥
न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यं अपुनर्भवम् ॥ ३४ ॥
नैरपेक्ष्यं परं प्राहुः निःश्रेयसमनल्पकम् ।
तस्मान्निराशिषो भक्तिः निरपेक्षस्य मे भवेत् ॥ ३५ ॥
न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥ ३६ ॥
एवमेतान्मया दिष्टान् अनुतिष्ठन्ति मे पथः ।
क्षेमं विन्दन्ति मत्स्थानं यद् ब्रह्म परमं विदुः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां एकादशस्कन्धे विंशोऽध्यायः ॥ २० ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

श्रीभगवानुवाच

य एतान्मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान्

क्षुद्रान्कामांश्चलैः प्राणैर्जुषन्तः संसरन्ति ते १

स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः

विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः २

शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु

द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ

धर्मार्थं व्यवहारार्थं यात्रार्थमिति चानघ ३

दर्शितोऽयं मयाचारो

धर्ममुद्वहतां धुरम् ४

भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पञ्चधातवः

आब्रह्मस्थावरादीनां शारीरा आत्मसंयुताः ५

वेदेन नामरूपाणि विषमाणि समेष्वपि

धातुषूद्धव कल्प्यन्त एतेषां स्वार्थसिद्धये ६

देशकालादिभावानां वस्तूनां मम सत्तम

गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ७

अकृष्णसारो देशानामब्रह्मण्योऽशुचिर्भवेत्

कृष्णसारोऽप्यसौवीर कीकटासंस्कृतेरिणम् ८

कर्मण्यो गुणवान्कालो द्रव्यतः स्वत एव वा

यतो निवर्तते कर्म स दोषोऽकर्मकः स्मृतः ९

द्रव्यस्य शुद्ध्यशुद्धी च द्रव्येण वचनेन च

संस्कारेणाथ कालेन महत्वाल्पतयाथ वा १०

शक्त्याशक्त्याथ वा बुद्ध्या समृद्ध्या च यदात्मने

अघं कुर्वन्ति हि यथा देशावस्थानुसारतः ११

धान्यदार्वस्थितन्तूनां रसतैजसचर्मणाम्

कालवाय्वग्निमृत्तोयैः पार्थिवानां युतायुतैः १२

अमेध्यलिप्तं यद्येन गन्धलेपं व्यपोहति

भजते प्रकृतिं तस्य तच्छौचं तावदिष्यते १३

स्नानदानतपोऽवस्था वीर्यसंस्कारकर्मभिः
मत्स्मृत्या चात्मनः शौचं शुद्धः कर्माचरेद्द्विजः १४
मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम्
धर्मः सम्पद्यते षड्भिरधर्मस्तु विपर्ययः १५
क्वचिद्गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुणः
गुणदोषार्थनियमस्तद्भिदामेव बाधते १६
समानकर्माचरणं पतितानां न पातकम्
औत्पत्तिको गुणः सङ्गो न शयानः पतत्यधः १७
यतो यतो निवर्तेत विमुच्येत ततस्ततः
एष धर्मो नृणां क्षेमः शोकमोहभयापहः १८
विषयेषु गुणाध्यासात्पुंसः सङ्गस्ततो भवेत्
सङ्गात्तत्र भवेत्कामः कामादेव कलिर्नृणाम् १९
कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्तते
तमसा ग्रस्यते पुंसश्चेतना व्यापिनी द्रुतम् २०
तया विरहितः साधो जन्तुः शून्याय कल्पते
ततोऽस्य स्वार्थविभ्रंशो मूर्च्छितस्य मृतस्य च २१
विषयाभिनिवेशेन नात्मानं वेद नापरम्
वृक्ष जीविकया जीवन्व्यर्थं भस्त्रेव यः श्वसन् २२
फलश्रुतिरियं नृणां न श्रेयो रोचनं परम्
श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम् २३
उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च
आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु २४
न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि
कथं युञ्ज्यात्पुनस्तेषु तांस्तमो विशतो बुधः २५
एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः
फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि २६
कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः
अग्निमुग्धा धूमतान्ताः स्वं लोकं न विदन्ति ते २७

न ते मामङ्ग जानन्ति हृदिस्थं य इदं यतः
उक्थशस्त्रा ह्यसुतृपो यथा नीहारचक्षुषः २८
ते मे मतमविज्ञाय परोक्षं विषयात्मकाः
हिंसायां यदि रागः स्याद्यज्ञ एव न चोदना २९
हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया
यजन्ते देवता यज्ञैः पितृभूतपतीन्खलाः ३०
स्वप्नोपममम‍ुं लोकमसन्तं श्रवणप्रियम्
आशिषो हृदि सङ्कल्प्य त्यजन्त्यर्थान्यथा वणिक् ३१
रजःसत्त्वतमोनिष्ठा रजःसत्त्वतमोजुषः
उपासत इन्द्र मुख्यान्देवादीन्न यथैव माम् ३२
इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि
तस्यान्त इह भूयास्म महाशाला महाकुलाः ३३
एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम्
मानिनां चातिलुब्धानां मद्वार्तापि न रोचते ३४
वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया इमे
परोक्षवादा ऋषयः परोक्षं मम च प्रियम् ३५
शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम्
अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ३६
मयोपबृंहितं भूम्ना ब्रह्मणानन्तशक्तिना
भूतेषु घोषरूपेण बिसेषूर्णेव लक्ष्यते ३७
यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात्
आकाशाद्घोषवान्प्राणो मनसा स्पर्शरूपिणा ३८
छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः
ॐकाराद्व्यञ्जितस्पर्श स्वरोष्मान्तस्थभूषिताम् ३९
विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः
अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम् ४०
गायत्र्युष्णिगनुष्टुप्च बृहती पङ्क्तिरेव च
त्रिष्टुब्जगत्यतिच्छन्दो ह्यत्यष्ट्यतिजगद्विराट् ४१

किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत्
इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन ४२
मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम्
एतावान्सर्ववेदार्थः शब्द आस्थाय मां भिदाम्
मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति ४३

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे एकविंशोऽध्यायः

श्रीउद्धव उवाच

कति तत्त्वानि विश्वेश सङ्ख्यातान्यृषिभिः प्रभो

नवैकादश पञ्च त्रीण्यात्थ त्वमिह शुश्रुम १

केचित्षड्विंशतिं प्राहुरपरे पञ्चविंशतिं

सप्तैके नव षट्केचिच्चत्वार्येकादशापरे

केचित्सप्तदश प्राहुः षोडशैके त्रयोदश २

एतावत्त्वं हि सङ्ख्यानामृषयो यद्विवक्षया

गायन्ति पृथगायुष्मन्निदं नो वक्तुमर्हसि ३

श्रीभगवानुवाच

युक्तं च सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा

मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ४

नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा

एवं विवदतां हेतुं शक्तयो मे दुरत्ययाः ५

यासां व्यतिकरादासीद्विकल्पो वदतां पदम्

प्राप्ते शमदमेऽप्येति वादस्तमनु शाम्यति ६

परस्परानुप्रवेशात्तत्त्वानां पुरुषर्षभ

पौर्वापर्यप्रसङ्ख्यानं यथा वक्तुर्विवक्षितम् ७

एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च

पूर्वस्मिन्वा परस्मिन्वा तत्त्वे तत्त्वानि सर्वशः ८

पौर्वापर्यमतोऽमीषां प्रसङ्ख्यानमभीप्सताम्

यथा विविक्तं यद्वक्त्रं गृह्णीमो युक्तिसम्भवात् ९

अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम्

स्वतो न सम्भवादन्यस्तत्त्वज्ञो ज्ञानदो भवेत् १०

पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि

तदन्यकल्पनापार्था ज्ञानं च प्रकृतेर्गुणः ११

प्रकृतिर्गुणसाम्यं वै प्रकृतेर्नात्मनो गुणाः

सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः १२

सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते

गुणव्यतिकरः कालः स्वभावः सूत्रमेव च १३
पुरुषः प्रकृतिर्व्यक्तमहङ्कारो नभोऽनिलः
ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव १४
श्रोत्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः
वाक्पाण्युपस्थपाय्वङ्घ्रिः कर्माण्यङ्गोभयं मनः १५
शब्दः स्पर्शो रसो गन्धो रूपं चेत्यर्थजातयः
गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः १६
सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी
सत्त्वादिभिर्गुणैर्धत्ते पुरुषोऽव्यक्त ईक्षते १७
व्यक्तादयो विकुर्वाणा धातवः पुरुषेक्षया
लब्धवीर्याः सृजन्त्यण्डं संहताः प्रकृतेर्बलात् १८
सप्तैव धातव इति तत्रार्थाः पञ्च खादयः
ज्ञानमात्मोभयाधारस्ततो देहेन्द्रियासवः १९
षडित्यत्रापि भूतानि पञ्च षष्ठः परः पुमान्
तैर्युक्त आत्मसम्भूतैः सृष्ट्वेदं समपाविशत् २०
चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः
जातानि तैरिदं जातं जन्मावयविनः खलु २१
सङ्ख्याने सप्तदशके भूतमात्रेन्द्रियाणि च
पञ्च पञ्चैकमनसा आत्मा सप्तदशः स्मृतः २२
तद्वत्षोडशसङ्ख्याने आत्मैव मन उच्यते
भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश २३
एकादशत्व आत्मासौ महाभूतेन्द्रियाणि च
अष्टौ प्रकृतयश्चैव पुरुषश्च नवेत्यथ २४
इति नानाप्रसङ्ख्यानं तत्त्वानामृषिभिः कृतम्
सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम् २५
श्रीउद्धव उवाच
प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ
अन्योन्यापाश्रयात्कृष्ण दृश्यते न भिदा तयोः

प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथात्मनि २६

एवं मे पुण्डरीकाक्ष महान्तं संशयं हृदि

छेत्तुमर्हसि सर्वज्ञ वचोभिर्नयनैपुणैः २७

त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तेऽत्र शक्तितः

त्वमेव ह्यात्ममायाया गतिं वेत्थ न चापरः २८

श्रीभगवानुवाच

प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ

एष वैकारिकः सर्गो गुणव्यतिकरात्मकः २९

ममाङ्ग माया गुणमय्यनेकधा विकल्पबुद्धीश्च गुणैर्विधत्ते

वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ३०

दृग्रूपमार्कं वपुरत्र रन्ध्रे परस्परं सिध्यति यः स्वतः खे

आत्मा यदेषामपरो य आद्यः स्वयानुभूत्याखिलसिद्धसिद्धिः ३१

एवं त्वगादि श्रवणादि चक्षुर्

जिह्वादि नासादि च चित्तयुक्तम् ३२

योऽसौ गुणक्षोभकृतो विकारः प्रधानमूलान्महतः प्रसूतः

अहं त्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामस ऐन्द्रियश्च ३३

आत्मापरिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदार्थनिष्ठः

व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात् ३४

श्रीउद्धव उवाच

त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो

उच्चावचान्यथा देहान्गृह्णन्ति विसृजन्ति च ३५

तन्ममाख्याहि गोविन्द दुर्विभाव्यमनात्मभिः

न ह्येतत्प्रायशो लोके विद्वांसः सन्ति वञ्चिताः ३६

श्रीभगवानुवाच

मनः कर्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम्

लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्तते ३७

ध्यायन्मनोऽनु विषयान्दृष्टान्वानुश्रुतानथ

उद्यत्सीदत्कर्मतन्त्रं स्मृतिस्तदनु शाम्यति ३८

विषयाभिनिवेशेन नात्मानं यत्स्मरेत्पुनः
जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ३९
जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद
विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः ४०
स्वप्नं मनोरथं चेत्थं प्राक्तनं न स्मरत्यसौ
तत्र पूर्वमिवात्मानमपूर्वं चानुपश्यति ४१
इन्द्रियायनसृष्ट्येदं त्रैविध्यं भाति वस्तुनि
बहिरन्तर्भिदाहेतुर्जनोऽसज्जनकृद्यथा ४२
नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च
कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते ४३
यथार्चिषां स्रोतसां च फलानां वा वनस्पतेः
तथैव सर्वभूतानां वयोऽवस्थादयः कृताः ४४
सोऽयं दीपोऽर्चिषां यद्वत्स्रोतसां तदिदं जलम्
सोऽयं पुमानिति नृणां मृषा गीर्धीर्मृषायुषाम् ४५
मा स्वस्य कर्मबीजेन जायते सोऽप्ययं पुमान्
म्रियते वामरो भ्रान्त्या यथाग्निर्दारुसंयुतः ४६
निषेकगर्भजन्मानि बाल्यकौमारयौवनम्
वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ४७
एता मनोरथमयीर्हान्यस्योच्चावचास्तनूः
गुणसङ्गादुपादत्ते क्वचित्कश्चिज्जहाति च ४८
आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ
न भवाप्ययवस्तूनामभिज्ञो द्वयलक्षणः ४९
तरोर्बीजविपाकाभ्यां यो विद्वाञ्जन्मसंयमौ
तरोर्विलक्षणो द्रष्टा एवं द्रष्टा तनोः पृथक् ५०
प्रकृतेरेवमात्मानमविविच्याबुधः पुमान्
तत्त्वेन स्पर्शसम्मूढः संसारं प्रतिपद्यते ५१
सत्त्वसङ्गादृषीन्देवान्रजसासुरमानुषान्
तमसा भूततिर्यक्त्वं भ्रामितो याति कर्मभिः ५२

नृत्यतो गायतः पश्यन्यथैवानुकरोति तान्
एवं बुद्धिगुणान्पश्यन्ननीहोऽप्यनुकार्यते ५३
यथाम्भसा प्रचलता तरवोऽपि चला इव
चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ५४
यथा मनोरथधियो विषयानुभवो मृषा
स्वप्नदृष्टाश्च दाशार्ह तथा संसार आत्मनः ५५
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ५६
तस्मादुद्धव मा भुङ्क्ष्व विषयानसदिन्द्रियैः
आत्माग्रहणनिर्भातं पश्य वैकल्पिकं भ्रमम् ५७
क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽथ वा
ताडितः सन्निरुद्धो वा वृत्त्या वा परिहापितः ५८
निष्ठ्युतो मूत्रितो वाज्ञैर्बहुधैवं प्रकम्पितः
श्रेयस्कामः कृच्छ्रगत आत्मनात्मानमुद्धरेत् ५९
श्रीउद्धव उवाच
यथैवमनुबुध्येयं वद नो वदतां वर ६०
सुदुःसहमिमं मन्य आत्मन्यसदतिक्रमम्
विदुषामपि विश्वात्मन्प्रकृतिर्हि बलीयसी
ऋते त्वद्धर्मनिरतान्शान्तास्ते चरणालयान् ६१

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे द्वाविंशोऽध्यायः

श्रीबादरायणिरुवाच

स एवमाशंसित उद्धवेन भागवतमुख्येन दाशार्हमुख्यः

सभाजयन्भृत्यवचो मुकुन्दस्तमाबभाषे श्रवणीयवीर्यः १

श्रीभगवानुवाच

बार्हस्पत्य स नास्त्यत्र साधुर्वै दुर्जनेरितैः

दुरक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः २

न तथा तप्यते विद्धः पुमान्बाणैस्तु मर्मगैः

यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः ३

कथयन्ति महत्पुण्यमितिहासमिहोद्धव

तमहं वर्णयिष्यामि निबोध सुसमाहितः ४

केनचिद्भिक्षुणा गीतं परिभूतेन दुर्जनैः

स्मरता धृतियुक्तेन विपाकं निजकर्मणाम् ५

अवन्तिषु द्विजः कश्चिदासीदाढ्यतमः श्रिया

वार्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः ६

ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणापि नार्चिताः

शून्यावसथ आत्मापि काले कामैरनर्चितः ७

दुःशीलस्य कदर्यस्य द्रुह्यन्ते पुत्रबान्धवाः

दारा दुहितरो भृत्या विषण्णा नाचरन्प्रियम् ८

तस्यैवं यक्षवित्तस्य च्युतस्योभयलोकतः

धर्मकामविहीनस्य चुक्रुधुः पञ्चभागिनः ९

तदवध्यानविस्रस्त पुण्यस्कन्धस्य भूरिद

अर्थोऽप्यगच्छन्निधनं बह्वायासपरिश्रमः १०

ज्ञात्यो जगृहुः किञ्चित्किञ्चिद्दस्यव उद्धव

दैवतः कालतः किञ्चिद्ब्रह्मबन्धोर्नृपार्थिवात् ११

स एवं द्रविणे नष्टे धर्मकामविवर्जितः

उपेक्षितश्च स्वजनैश्चिन्तामाप दुरत्ययाम् १२

तस्यैवं ध्यायतो दीर्घं नष्टरायस्तपस्विनः

खिद्यतो बाष्पकण्ठस्य निर्वेदः सुमहानभूत् १३

स चाहेदमहो कष्टं वृथात्मा मेऽनुतापितः
न धर्माय न कामाय यस्यार्थायास ईदृशः १४
प्रायेणाथाः कदर्याणां न सुखाय कदाचन
इह चात्मोपतापाय मृतस्य नरकाय च १५
यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः
लोभः स्वल्पोऽपि तान्हन्ति श्वित्रो रूपमिवेप्सितम् १६
अर्थस्य साधने सिद्धे उत्कर्षे रक्षणे व्यये
नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम् १७
स्तेयं हिंसानृतं दम्भः कामः क्रोधः स्मयो मदः
भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च १८
एते पञ्चदशानर्था ह्यर्थमूला मता नृणाम्
तस्मादनर्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् १९
भिद्यन्ते भ्रातरो दाराः पितरः सुहृदस्तथा
एका स्निग्धाः काकिणिना सद्यः सर्वेऽरयः कृताः २०
अर्थेनाल्पीयसा ह्येते संरब्धा दीप्तमन्यवः
त्यजन्त्याशु स्पृधो घ्नन्ति सहसोत्सृज्य सौहृदम् २१
लब्ध्वा जन्मामरप्रार्थ्यं मानुष्यं तद्द्विजाग्र्यताम्
तदनादृत्य ये स्वार्थं घ्नन्ति यान्त्यशुभां गतिम् २२
स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान्
द्रविणे कोऽनुषज्जेत मर्त्योऽनर्थस्य धामनि २३
देवर्षिपितृभूतानि ज्ञातीन्बन्धूंश्च भागिनः
असंविभज्य चात्मानं यक्षवित्तः पतत्यधः २४
व्यर्थयार्थेहया वित्तं प्रमत्तस्य वयो बलम्
कुशला येन सिध्यन्ति जरठः किं नु साधये २५
कस्मात्सङ्क्लिश्यते विद्वान्व्यर्थयार्थेहयासकृत्
कस्यचिन्मायया नूनं लोकोऽयं सुविमोहितः २६
किं धनैर्धनदैर्वा किं कामैर्वा कामदैरुत
मृत्युना ग्रस्यमानस्य कर्मभिर्वोत जन्मदैः २७

नूनं मे भगवांस्तुष्टः सर्वदेवमयो हरिः
येन नीतो दशामेतां निर्वेदश्चात्मनः प्लवः २८
सोऽहं कालावशेषेण शोषयिष्येऽङ्गमात्मनः
अप्रमत्तोऽखिलस्वार्थे यदि स्यात्सिद्ध आत्मनि २९
तत्र मामनुमोदेरन्देवास्त्रिभुवनेश्वराः
मुहूर्तेन ब्रह्मलोकं खट्वाङ्गः समसाधयत् ३०
श्रीभगवानुवाच
इत्यभिप्रेत्य मनसा ह्यावन्त्यो द्विजसत्तमः
उन्मुच्य हृदयग्रन्थीन्शान्तो भिक्षुरभून्मुनिः ३१
स चचार महीमेतां संयतात्मेन्द्रियानिलः
भिक्षार्थं नगरग्रामानसङ्गोऽलक्षितोऽविशत् ३२
तं वै प्रवयसं भिक्षुमवधूतमसज्जनाः
दृष्ट्वा पर्यभवन्भद्र बह्वीभिः परिभूतिभिः ३३
केचित्त्रिवेणुं जगृहुरेके पात्रं कमण्डलुम्
पीठं चैकेऽक्षसूत्रं च कन्थां चीराणि केचन
प्रदाय च पुनस्तानि दर्शितान्याददुर्मुनेः ३४
अन्नं च भैक्ष्यसम्पन्नं भुञ्जानस्य सरित्तटे
मूत्रयन्ति च पापिष्ठाः ष्ठीवन्त्यस्य च मूर्धनि ३५
यतवाचं वाचयन्ति ताडयन्ति न वक्ति चेत्
तर्जयन्त्यपरे वाग्भिः स्तेनोऽयमिति वादिनः
बध्नन्ति रज्ज्वा तं केचिद्बध्यतां बध्यतामिति ३६
क्षिपन्त्येकेऽवजानन्त एष धर्मध्वजः शठः
क्षीणवित्त इमां वृत्तिमग्रहीत्स्वजनोज्झितः ३७
अहो एष महासारो धृतिमान्गिरिराडिव
मौनेन साधयत्यर्थं बकवद्दृढनिश्चयः ३८
इत्येके विहसन्त्येनमेके दुर्वातयन्ति च
तं बबन्धुर्निरुरुधुर्यथा क्रीडनकं द्विजम् ३९
एवं स भौतिकं दुःखं दैविकं दैहिकं च यत्

भोक्तव्यमात्मनो दिष्टं प्राप्तं प्राप्तमबुध्यत ४०
परिभूत इमां गाथामगायत नराधमैः
पातयद्भिः स्व धर्मस्थो धृतिमास्थाय सात्त्विकीम् ४१
द्विज उवाच
नायं जनो मे सुखदुःखहेतुर्न देवतात्मा ग्रहकर्मकालाः
मनः परं कारणमामनन्ति संसारचक्रं परिवर्तयेद्यत् ४२
मनो गुणान्वै सृजते बलीयस्ततश्च कर्माणि विलक्षणानि
शुक्लानि कृष्णान्यथ लोहितानि तेभ्यः सवर्णाः सृतयो भवन्ति ४३
अनीह आत्मा मनसा समीहता हिरण्मयो मत्सख उद्विचष्टे
मनः स्वलिङ्गं परिगृह्य कामान्जुषन्निबद्धो गुणसङ्गतोऽसौ ४४
दानं स्वधर्मो नियमो यमश्च श्रुतं च कर्माणि च सद्व्रतानि
सर्वे मनोनिग्रहलक्षणान्ताः परो हि योगो मनसः समाधिः ४५
समाहितं यस्य मनः प्रशान्तं दानादिभिः किं वद तस्य कृत्यम्
असंयतं यस्य मनो विनश्यद्दानादिभिश्चेदपरं किमेभिः ४६
मनोवशेऽन्ये ह्यभवन्स्म देवा मनश्च नान्यस्य वशं समेति
भीष्मो हि देवः सहसः सहीयान्युञ्ज्याद्वशे तं स हि देवदेवः ४७
तं दुर्जयं शत्रुमसह्यवेगमरुन्तुदं तन्न विजित्य केचित्
कुर्वन्त्यसद्विग्रहमत्र मर्त्यैर्मित्राण्युदासीनरिपून्विमूढाः ४८
देहं मनोमात्रमिमं गृहीत्वा ममाहमित्यन्धधियो मनुष्याः
एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि भ्रमन्ति ४९
जनस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनश्चात्र हि भौमयोस्तत्
जिह्वां क्वचित्सन्दशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत् ५०
दुःखस्य हेतुर्यदि देवतास्तु किमात्मनस्तत्र विकारयोस्तत्
यदङ्गमङ्गेन निहन्यते क्वचित्क्रुध्येत कस्मै पुरुषः स्वदेहे ५१
आत्मा यदि स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः
न ह्यात्मनोऽन्यद्यदि तन्मृषा स्यात्क्रुध्येत कस्मान्न सुखं न दुःखम्५२
ग्रहा निमित्तं सुखदुःखयोश्चेत्किमात्मनोऽजस्य जनस्य ते वै
ग्रहैर्ग्रहस्यैव वदन्ति पीडां क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ५३

कर्मास्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तद्धि जडाजडत्वे
देहस्त्वचित्पुरुषोऽयं सुपर्णः क्रुध्येत कस्मै न हि कर्म मूलम् ५४
कालस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोऽसौ
नाग्नेर्हि तापो न हिमस्य तत्स्यात्क्रुध्येत कस्मै न परस्य द्वन्द्वम् ५५
न केनचित्क्वापि कथञ्चनास्य द्वन्द्वोपरागः परतः परस्य
यथाहमः संसृतिरूपिणः स्यादेवं प्रबुद्धो न बिभेति भूतैः ५६
एतां स आस्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः
अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दाङ्घ्रिनिषेवयैव ५७
श्रीभगवानुवाच
निर्विद्य नष्टद्रविणे गतक्लमः प्रव्रज्य गां पर्यटमान इत्थम्
निराकृतोऽसद्भिरपि स्वधर्मादकम्पितोऽमूं मुनिराह गाथाम् ५८
सुखदुःखप्रदो नान्यः पुरुषस्यात्मविभ्रमः
मित्रोदासीनरिपवः संसारस्तमसः कृतः ५९
तस्मात्सर्वात्मना तात निगृहाण मनो धिया
मय्यावेशितया युक्त एतावान्योगसङ्ग्रहः ६०
य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः
धारयञ्छ्रावयञ्छृण्वन्द्वन्द्वैर्नैवाभिभूयते ६१
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे त्रयोविंशोऽध्यायः

सांख्ययोगवर्णनम् -

श्रीभगवानुवाच -

( अनुष्टुप् )

अथ ते सम्प्रवक्ष्यामि साङ्ख्यं पूर्वैर्विनिश्चितम् ।
यद्विज्ञाय पुमान् सद्यो जह्याद् वैकल्पिकं भ्रमम् ॥ १ ॥
आसीज्ज्ञानमथो अर्थ एकमेवाविकल्पितम् ।
यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे ॥ २ ॥
तन्मायाफलरूपेण केवलं निर्विकल्पितम् ।
वाङ्मनोऽगोचरं सत्यं द्विधा समभवद् बृहत् ॥ ३ ॥
तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।
ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते ॥ ४ ॥
तमो रजः सत्त्वमिति प्रकृतेरभवन् गुणाः ।
मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च ॥ ५ ॥
तेभ्यः समभवत् सूत्रं महान् सूत्रेण संयुतः ।
ततो विकुर्वतो जातो अहङ्कारो विमोहनः ॥ ६ ॥
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ।
तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः ॥ ७ ॥
अर्थस्तन्मात्रिकाज्जज्ञे तामसादिन्द्रियाणि च ।
तैजसाद् देवता आसन् एकादश च वैकृतात् ॥ ८ ॥
मया सञ्चोदिता भावाः सर्वे संहत्यकारिणः ।
अण्डं उत्पादयामासुं ममायतनमुत्तमम् ॥ ९ ॥
तस्मिन् अहं समभवं अण्डे सलिलसंस्थितौ ।
मम नाभ्यामभूत् पद्मं विश्वाख्यं तत्र चात्मभूः ॥ १० ॥
सोऽसृजत्तपसा युक्तो रजसा मदनुग्रहात् ।
लोकान् सपालान् विश्वात्मा भूर्भुवः स्वरिति त्रिधा ॥ ११ ॥
देवानामोक आसीत् स्वर्भूतानां च भुवः पदम् ।
मर्त्यादीनां च भूर्लोकः सिद्धानां त्रितयात् परम् ॥ १२ ॥
अधोऽसुराणां नागानां भूमेरोकोऽसृजत् प्रभुः ।
त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् ॥ १३ ॥
योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः ।
महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ॥ १४ ॥
मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् ।

गुणप्रवाह एतस्मिन् उन्मज्जति निमज्जति ॥ १५ ॥
अणुर्बृहत् कृशः स्थूलो यो यो भावः प्रसिध्यति ।
सर्वोऽप्युभयसंयुक्तः प्रकृत्या पुरुषेण च ॥ १६ ॥
यस्तु यस्यादिरन्तश्च स वै मध्यं च तस्य सन् ।
विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥ १७ ॥
यदुपादाय पूर्वस्तु भावो विकुरुतेऽपरम् ।
आदिरन्तो यदा यस्य तत् सत्यमभिधीयते ॥ १८ ॥
प्रकृतिर्यस्य उपादानं आधारः पुरुषः परः ।
सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम् ॥ १९ ॥
सर्गः प्रवर्तते तावत् पौवापर्येण नित्यशः ।
महान् गुणविसर्गार्थः स्थित्यन्तो यावदीक्षणम् ॥ २० ॥
विराण्मयाऽऽसाद्यमानो लोककल्पविकल्पकः ।
पञ्चत्वाय विशेषाय कल्पते भुवनैः सह ॥ २१ ॥
अन्ने प्रलीयते मर्त्यं अन्नं धानासु लीयते ।
धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते ॥ २२ ॥
अप्सु प्रलीयते गन्ध आपश्च स्वगुणे रसे ।
लीयते ज्योतिषि रसो ज्योती रूपे प्रलीयते ॥ २३ ॥
रूपं वायौ स च स्पर्शे लीयते सोऽपि चाम्बरे ।
अम्बरं शब्दतन्मात्र इन्द्रियाणि स्वयोनिषु ॥ २४ ॥
योनिर्वैकारिके सौम्य लीयते मनसीश्वरे ।
शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः ॥ २५ ॥
स लीयते महान् स्वेषु गुणेशु गुणवत्तमः ।
तेऽव्यक्ते संप्रलीयन्ते तत्काले लीयतेऽव्यये ॥ २६ ॥
कालो मायामये जीवे जीव आत्मनि मय्यजे ।
आत्मा केवल आत्मस्थो विकल्पापायलक्षणः ॥ २७ ॥
एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः ।
मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः ॥ २८ ॥
एष साङ्ख्यविधिः प्रोक्तः संशयग्रन्थिभेदनः ।
प्रतिलोमानुलोमाभ्यां परावरदृशा मया ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां एकादशस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥
हरिः ॐ तत्सत् श्रीकृष्णार्पणमस्तु ॥

